


विलासः - ३

# रसिकप्रिया

JOURNAL OF THE MADRAS SANSKRIT COLLEGE - 2016

सविलासरसोल्लासा सुवृत्ता रसिकप्रिया । सुगुणालङ्क्रिया जीयात् पत्रिका सुरगीरिव ।।

प्रधानसंपादकः
आचार्यः ता.पे. राधाकृष्णन् नम्पूतिरिः

Chief Editor:
Dr. T.P. Radhakrishnan Nambuthiri
Principal, The Madras Sanskrit College

# ACTIVITIES OF THE COLLEGE





College Journal "Rasikapriya" - Vol. 2 Released by Dr. S. Gurumoorthy

## Sanskrit Day - 12.09.2015





Smt. Nirmala Sitaraman, Hon'ble Minister of Commerce & Industry, Govt. of India, presided over and honoured the recipients of "Certificate of Honour" for the year 2015




A Special Address was given by Sri Arvind. P. Datar, Senior Advocate, Chennai.

## Awards



Smt. Smiriti Irani, Hon'ble Minister, H.R.D. awarded the tile "Mahamhopadhyaya" to Dr. Mani Dravid Asst. Prof. in Mimamsa of our College.



Students of our College bag Gold, Silver & Bronze Medals in various contests of the All India Sanskrit Elocution Contest, 2016

ISSN : 2454 - 2547

# JOURNAL OF THE MADRAS SANSKRIT COLLEGE

# रसिकप्रिया

विलासः - ३

# RASIKAPRIYA

ISSUE - 3

प्रधानसंपादकः

आचार्यः ता.पे. राधाकृष्णन् नम्पूतिरिः

*Chief Editor :*

**Dr. T.P. Radhakrishnan Nambuthiri**

Principal, The Madras Sanskrit College

*Published by :*



**THE MADRAS SANSKRIT COLLEGE**

(Affiliated to the University of Madras)

(Aided by the Rashtriya Samskritha Samsthanam, New Delhi)

84, Thiru-vi-ka Road (Royapettah High Road), Mylapore, Chennai - 600 004.

Phone : 044-2498 0421 e-mail : mds.sanskritcollege@gmail.com

website : www.madrassanskritcollege.com

**2016**

Title of the Book : RASIKAPRIYA
ANNUAL JOURNAL OF THE MADRAS SANSKRIT COLLEGE

ISSN : 2454 - 2547

First Print : March 2016



Copies : 300

Price : **Rs.200/-**

Chief Editor : **Dr. T.P. Radhakrishnan Nambuthiri**

Editor : **Dr. Mani Dravid**, Prof. & HOD., Mimamsa
Editorial Board : **Dr. S. Arunasundaram**, Prof. & HOD., Vyakarana
**Dr. K. Shyamasundara**, Asst. Prof. in Vyakarana

Publisher : **Dr. T.P. Radhakrishnan Nambuthiri**, Principal
The Madras Sanskrit College
84, Thiru-vi-ka Road (Royapettah High Road)
Mylapore, Chennai - 600 004.

Printer : Shri harish Printers
Mandaveli, Chennai - 600 028.

(Printed and Published by the Madras Sanskrit College, Mylapore, Chennai - 600 004 under financial assistance from the Rashtriya Samskritha Samsthanam, New Delhi, Ministry of H.R.D., Govt. of India).

3 copies

## विषयानुक्रमणिका

Website : www.kamakoti.org. ☎: 044-27222115
044-27224305



II Sri Chandramouleeswaraya Namaha: ||
Sri Sankara Bhaghavadpadacharya Paramparagatha Moolamnaya Sarvajnapeeta

His Holiness Sri Kanchi Kamakoti Peetadhipathi

# JAGADGURU SRI SANKARACHARYA SWAMIGAL

**Srimatam Samsthanam**

**No. 1, Salai Street, KANCHEEPURAM - 631 502.**



वेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां
श्रीमच्छङ्करभगवत्पादानाम् अधिष्ठाने श्रीमत्काञ्चीकामकोटिमूलाम्नायसर्वज्ञपीठसिंहासने
अभिषिक्तानां
श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादानाम् अन्तेवासिवर्यैः श्रीमज्जयेन्द्रसरस्वतीश्रीपादैः
तदन्तेवासिवर्यैः श्रीमच्छङ्करविजयेन्द्रसरस्वतीश्रीपादैश्च

मद्रपुरीसंस्कृतकलाशालाध्यक्षाणां श्रीमतां देवीप्रसादशर्ममहोदयानां विषये क्रियते नारायणस्मृतिः । धर्मश्रद्धाविभूषितैः श्रीमद्भिः कृष्णस्वाम्यार्यैः नवाधिकशताद् वर्षेभ्यः प्राक् प्रतिष्ठापितायाम् अस्यां विद्यासंस्थायाम् इयत्सु संवत्सरेषु वेदान्तमीमांसाव्याकरणन्यायादिषु शास्त्रेषु अनुत्तमं प्रशिक्षणं समवाप्तवन्तो नैके पण्डिततल्लजाः शास्त्रपरम्परां वर्धितवन्तो वर्धयन्तश्च सन्ति । सम्प्रदायरीत्या प्रवर्त्यमानं प्रवर्ध्यमानं चैव शास्त्रप्रशिक्षणं साधुत्वं प्राप्नोतितराम् इत्यतः अस्याः सम्प्रदायपरम्परायाः संरक्षणम् अवश्यकरणीयं वर्तते । तदर्थं च नूनम् अत्यन्तोपकारि भवति विद्वद्भिः अध्ययन-अध्यापन-चिन्तन-वाक्यार्थगोष्ठ्यादौ शास्त्रसागरे निमज्ज्य प्रयत्नपूर्वकम् आसादितानां गूढरहस्यरत्नानां ग्रन्थात्मना निबन्धनं प्रकाशनं च भाविकालाय भूतये । तस्माद् अधुना भवन्तः शास्त्रीयनिबन्धसङ्ग्रहात्मिकां रसिकप्रियानाम्नीं वार्षिकीं पत्रिकां प्रकाशयितुम् उद्युक्ता इति श्रुत्वा भृशं मोदामहे । अस्मदाराध्यदेवतायाः महात्रिपुरसुन्दरीसमेतस्य भगवतः चन्द्रमौलीश्वरस्य अनुग्रहेण श्लाघनीयोऽयं प्रयत्नः अविच्छेदेन अनुवर्तताम्, अभिप्रेतं च शास्त्रप्रचाररूपं साफल्यम् अश्नुताद् इत्याशास्महे ।

नारायणस्मृतिः ।

यात्रास्थानम् – काञ्चीपुरम्
जयसंवत्सरकुम्भशुक्लतृतीया
शाङ्करसंवत्सरः - २५२३

॥ वाग्देव्यै नमः ॥

# सम्पादकीयम्

Dr. ता.पे. राधाकृष्णन् नम्बूतिरिः,

प्राचार्यः, मद्रपुरीसंस्कृतमहाविद्यालयः

शेषाद्रिनाथविदुषा समारब्धा सतां प्रिया ।
शास्त्रार्थसङ्ग्रहपरा राजते रसिकप्रिया ॥
गुरून् अज्ञानदोषघ्नान् एकदन्तं सरस्वतीम् ।
व्यासं च दक्षिणामूर्तिं प्रणमामि पुनः पुनः ॥

अस्मद्गुरुभिः दर्शनपारङ्गताद्यनेकबिरुदभूषितैः डा. के. वि. शेषाद्रिनाथशास्त्रिमहोदयैः बहुकालात् पूर्वं समारब्धा मध्ये नैककारणैः स्तब्धा प्रगतवर्षे प्राक्तनप्राचार्यैः पञ्चभाषाप्रवीणैः डा. नु. वे. देवीप्रसाद-महोदयैः सम्पाद्य प्रकाशिता रसिकप्रियाख्या सहृदयहृदयोल्लासदायिनी इदंकलाशालायाः पत्रिकेयम् अध्यापकानां परिश्रमेण निर्वाहकसमितिसहयोगेन राष्ट्रियसंस्कृतसंस्थानाधिकारिणाम् आर्थिकसाहाय्येन च श्रीकाञ्चीकामकोटिपीठजगद्गुरूणाम् करुणापूरितानुग्रहविशेषेण नानामठाधीशानां करुणाकटाक्षपातैः तत्तत्संस्थागतानेकविद्वद्बृन्दानाम् अस्मत्कलाशालायाः पूर्वतनप्राचार्याचार्यछात्रगणानाम् अस्मद्धितैषिणां सर्वेषां साहाय्येन च मुहुः प्रकाशनपथमारोहति इति मोमुद्यते मे मनः।

नवदेहलीस्थ राष्ट्रियसंस्कृतसंस्थानस्य आर्थिकसाहाय्येन "श्रीमद्वाल्मीकीयरामायणे धर्ममीमांसा" इति शीर्षके अस्मन्महाविद्यालये इदंप्रथमतया समायोजितायां राष्ट्रियसंस्कृतसंगोष्ठ्यां विविधप्रदेशीयैः विद्वदग्रेसरैः नानाविषयान्कोडीकृत्य नानाविषयेषु प्रस्तुताः प्रबन्धाः सङ्गृह्यात्र प्रकाश्यन्ते।

एतदवसरे अस्याः प्रकाशनाय कृतभूरिपरिश्रमेभ्यः अस्मत्कलाशालामीमांसाविभागाध्यक्षेभ्यः महामहोपाध्याय डा. मणिद्राविडमहोदयेभ्यः, व्याकरणाचार्येभ्यः डा. एस्. अरुणसुन्दरमहोदयेभ्यः, डा. श्यामसुन्दरमहोदयेभ्यः मदीयां कृतज्ञतां प्रकटयामि। एवं प्रत्यक्षतया परोक्षतया च ये साहाय्यम् आचारितवन्तः तेभ्यः समेभ्यः धन्यवादाः निवेद्यन्ते।

आदिकाव्यस्य वाल्मीकिरामायणस्य प्रभावः भारतीयजनतायाम् अद्याऽपि दरीदृश्यते। **"इतिहासपुराणं च पञ्चमो वेद उच्यते** "(श्रीभाग. १-५-२०) इति भागवतोक्तप्रकारेण रामायणस्य वेदसमानतामेव मन्यन्ते भारतीयाः। धर्मसंहिता एव रामायणम्। पितृधर्मः, पुत्रधर्मः, मातृधर्मः, भ्रातृधर्मः, मित्रधर्मः, पत्नीधर्मः, पतिधर्मः, शरणागतिधर्मः, एवं सर्वोऽपि धर्मः मूर्तिरूपेण राराज्यते श्रीमद्रामायणे। तत्रस्थनायकः श्रीरामः धर्मस्वरूपः **'रामो विग्रहवान् धर्मः '** इति खलु उच्यते। किं बहुना? रामायणारम्भे वाल्मीकिः एवं पृच्छति नारदम् –

**"को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥**
**चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।**
**विद्वान् कः, कः समर्थश्च कश्चैकप्रियदर्शनः ॥**
**आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।**
**कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥**
**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।**
**महर्षे त्वं समर्थोऽसि ज्ञातुमेवं विधं नरम् "॥**

गुणवान् वीर्यवान् सत्यव्रतः चारित्रयुक्तः सर्वभूतहितः आत्मवान् अनसूयकः द्युतिमान् नरः कोऽस्ति इति पृष्टे नारदः त्रिनवति श्लोकैः रामायणसारमेव अकथयत् । अतः वैकुण्ठपुरुषस्य मानुषावताररूपाद् रामादन्यः कोऽपि ईदृशगुणयुक्तः न भवति इति नारदस्य प्रतिवचनसारः। रामस्य आचरणं सर्वं धर्मशास्त्रत्वेन परिगण्यन्ते। अतः रामायणं धर्मशास्त्रमेव । तादृशं रामायणं सागरीकृत्य बहुभिः विद्वद्भिः बहुधा मथनं कृत्वा अमृतरूपाणि धर्मतत्त्वानि प्रबन्धरूपेण बहिरानीतानि। अस्मिन् संवत्सरे तान्यप्यत्र क्रोडीकृत्य रसिकप्रियायां प्रकाशयन्ते। तां च रसिकप्रियां सहृदयानां विद्वज्जनानां समक्षं प्रणतिपूर्वकं समर्पये॥

शुभम्

***** .

# संस्कृतस्तवमणिमाला

डा. नु. वे. देवीप्रसादशर्मा

प्राचार्यचरः, मद्रपुरीसंस्कृतमहाविद्यालयस्य

१ कल्याणं तनुतात् कवीन्द्रजननी काचिद् विशुभ्राकृति-
बोधैकप्रवणान्तरङ्गनलिनप्रोद्भासिनी श्रीखनिः।
यत्कारुण्यवशात् सुमन्दमतयो मूका जडिम्ना हता
वाचामीश्वरतां भजन्ति भुवनख्याता बुधाग्र्या भृशम्॥

२ वाणी गीर्वाणवृन्दानतमुकुटमणिस्पर्शरक्ताङ्घ्रिपद्मा
वेणीगन्धप्रलोभानुसृतमधुलिहां झङ्कृतैर्मोदमाना।
वीणातन्त्रीषु सक्तारुणनखरुचितो लोहिता भाति शुभ्रा
कोणस्याक्ष्णोः प्रसारात् प्रथयतु वचसां वाहिनीमास्यतो मे॥

३ मातः! संस्कृतवाणि ! तावकपदद्वन्द्वप्रणत्या चिर-
प्राप्तद्वित्रपदप्रयोगविधिना डिम्भेन दम्भान्मया।
दीव्यत्सत्कविमण्डिताखिलजगज्जेगीयमानोल्लस-
त्पीयूषाम्बुधिवीचितुल्यवचना शक्येत गातुं कथम्॥

४ या लोकत्रयरक्षणैकनिपुणा धर्मव्यवस्थापिका
या दिव्यामलनिम्नगेन कलुषप्रध्वंसिनी राजते।
या रत्नाकरमेखलापरिवृता स्वर्लोकगर्वापह-
श्रीमद्भारतभूमिकीर्तिगरिमा तां नौमि संस्कृत्रिमाम्॥

५ या मायाकलितान्धकारपटलीनिर्भेदनप्रोज्ज्वलत्-
तिग्मांशुद्युतिभासुराऽसुरगुणच्छेदक्षमा चाक्षया।
या शक्तिः पुरुषार्थहेतुरहितक्ष्माशान्तिदूती वरा
तामीडेमहि भारतीं दिविषदां भाग्यं नृणां दैवतम्॥

६ यन्माधुर्यपिपासवो दिविषदः प्रेत्यादराद्धूतलम्
स्वीकुर्वन्ति हविः शुभैः श्रुतिगतैर्मन्त्रैः समाकारिताः।
प्रीत्या सुस्वरसामगानममृतं पीत्वा प्रसन्ना मुहुः
स्वर्गोर्वीगसुखानि संप्रददते श्रेष्ठां नुमस्तां गिरम्॥

७ यत्पीयूषनिभं निपीय नितरां तुष्टा वचो मानवा
मृद्वीकामधुशर्करादिषु मतिं प्रीतिं च नो कुर्वते।
तां कल्याणहितार्थशाश्वतपरानन्दप्रदां शाश्वतीं
वन्दे संस्कृतभारतीमिह चतुर्वेदस्वरूपां शिवाम्॥

८ शिक्षाव्याकरणादिभिर्बहुविधैरङ्गैः श्रुतेरुज्ज्वलां
मीमांसाद्वयतर्कयोगगणितैः शास्त्रैश्च संविस्तृताम्।
आयुर्वेदपुरस्सरैरपि कलासाहित्यविद्याधरां
वन्दे नित्यविनूत्नयौवनवतीं सानातनीं भारतीम्॥

९ शक्तिर्या निखिलाण्डकोटिजनतासौहार्दसौख्यप्रदा
भुक्तिर्या विबुधेशसत्कविधिया पीयूषविस्पर्धिनी।
रक्तिः सत्कविताविनोदिहृदयायात्यद्भुतानन्ददा
मुक्तिः सङ्गकलङ्कवर्जितनिजस्वान्तोत्थबोधात्मनाम्॥

१० याम् आसाद्य हृदम्बुजन्मनि पुरा वल्मीकजन्मा मुनिः
चक्रे रामकथां मनोरमरसालङ्कारकाव्याकृतिम्।
यामाश्रित्य सहस्रशः सुकविभिः सन्तन्यतेऽद्यापि वाक्
तामेवादिकृतिं कविं रघुकुलोत्तंसं च वाचं स्तुमः॥

११ नानाख्याननिधानमागमकलाविद्भिर्विहङ्गैः श्रितं
वेदव्यासविवर्धितञ्च मधुरैर्धर्मार्थमोक्षैः फलैः ।
चित्ताह्लादकसूक्तिपुष्पनिचयैः श्रुत्यर्थमूलैर्दृढं
राजद्भारतकल्पवृक्षमसकृत् सेवध्वमार्या मुहुः॥

१२ यच्छक्त्याऽखिलभारतावनिरसावैक्यं भजन्ती स्थिरा
प्राप्तैर्वर्णमतप्रकीर्णगतिभिर्भिन्नाऽप्यभेदान्विता।
विद्याज्ञानपुमर्थसंस्कृतिमतां भूः पुण्यभूः कर्मभूः
एषा संस्कृतभारती विजयते लोकत्रयीशङ्करी ॥

१३ भाषाः सन्तु सहस्रशो भुवनगा या एकदेशस्थिता
नष्टाः काश्चन सम्प्रतीह कतिचिद् भ्रष्टा न वा व्याकृताः।
भाषैका किल संस्कृता दिशि दिशि व्याप्ताऽखिले भारते
या ऽऽकैलासकुमारि सर्वजनताचेतस्सु संपूज्यते॥

१४ आस्वाद्यैर्मधुरैः शुचिस्मितनिभैर्वाग्देवतानन्दनैः
काव्यालङ्कृतिभिर्गुणैर्नवरसैरास्वाद्यतामेति या ।
पुण्या सत्पुरुषार्थदाननिरता देवर्षिमर्त्यैर्नुता
तां भाषानिकुरुम्बमातरमिमां वाचं भजे संस्कृताम् ॥

१५ नानाभाषानिदानं निगमविधिकलाशास्त्रकाव्यैर्गरिष्ठं
स्वङ्गैः षड्भिः श्रुतीनां विमलविवृतिभिर्विस्तृतार्थैश्च पुष्टम् ।
धर्माधर्मावबोधैः पृथुलसुचरितैः सेतिहासैः पुराणैः
भाति श्रीसंस्कृतं तद्भुवि दधदसमां भारतस्य प्रतिष्ठाम् ॥

१६ यद्वाङ्मयस्थनिखिलानि पदानि बुद्ध्या सद्यः स्फुरत्प्रतिभया लघुभूतसूत्रैः ।
यो व्याकरोत् तदतिमानुषमद्भुतार्थं तं पाणिनिं प्रथमपूज्यमहर्षिमीडे ॥

१७ यस्यागमात् सुमनसां हृदयानि काव्यमाधुर्यसौरभरसोदयवन्ति भान्ति ।
साहित्यसुन्दरवनस्य लसन्तमेनं श्रीकालिदाससुकवीन्द्रगुरुं नमामः ॥

१८ भिन्नै रसैर्भिन्नरुचेर्जनस्य प्रीत्यै सुराणामपि संस्कृतश्रीः ।
सुधा सदैवैकरसेति खिन्ना भुवं विहायेन्दुतलं विवेश ॥

१९ मासे सकृच्छोडशभिः कलाभिः कलाधरः संस्कृतवाङ्मयस्य ।
सदा चतुष्षष्टिकलासमग्रश्रिया जितोऽसौ वियदुत्पपात ॥

२० भासस्य भासा कृतमन्दहासा प्रबोधचन्द्रोदयचिद्विलासा ।
वेण्या नदद्भीमकृताट्टहासा विभासि गैर्वाणि विभिन्नभावैः ॥

२१ विभूतयो भान्ति गिरो हि यस्य रसेश्वरं तं भवभूतिमीडे ।
यस्योत्तरे रामचरित्रकाव्ये (श्रुते) दृष्टे द्रवत्येव दृषच्च हृच्च ॥

२२ महागभीरे सुरवागरण्ये बाणश्चरन् धीरगभीरगत्या ।
पञ्चाननो गद्यकविप्रधानः कथं तुरङ्गत्वमवाप चित्रम् ! ॥

२३ चिन्तामणेर्मननलब्धसमस्तविद्यात् प्रज्ञाप्रगल्भमतिनिर्मितनैषधीयात् ।
श्रीहर्षहर्षदचमत्कृतिसार्वभौमात् कोऽन्यः कविर्भुवि भवेद्वचसा गरीयान् ॥

२४ क्वचिद्वैदर्भीति क्वचिदपि च गौडीति विकटा
क्वचित्पाञ्चाली चेत्यखिलगुणसन्दोहसुषमा ।
क्वचिद्वक्रोक्त्या च ध्वनिभिरपि चालङ्कृतिमती
रसोल्लासा काऽपि स्फुरति ननु वाणी सुमनसाम् ॥

२५ रे रे मत्तमयूर ! नृत्यसि कथं स्पृष्टोऽसि नो लज्जया ?
लीलानिर्मितचित्रवर्णनिचयैः पद्यैः सुवृत्तैर्युताम् ।
सङ्ख्यातीतसुभाषितैस्सुमधुरैः संशोभमानां भुवि
पश्यन् संस्कृतभारतीमिह पुनर्बर्हं बहिर्मा कृथाः ॥

२६ श्रुतिमतरिपुपक्षैर्वाममार्गप्रवृत्तै-
जर्नहितपरचिन्ताचित्तहीनैश्च कैश्चित् ।
स्वहितमनुसरद्भिर्नायकैर्निन्द्यतेऽयं
सततपदविमोहाकृष्टिपुष्टैर्वचोभिः ॥

२७ नाध्येयैषा भूतिकामैर्मनुष्यैः नैवाचर्यं वैदिकं कर्म लोके ।
इत्येवं तान् बोधयन्तोऽज्ञवर्गान् स्वं स्वं कामं पूरयन्तश्चरन्ति ॥

२८ विना भानुना का हि दीप्तिर्जगत्याम् ? विना चेन्दुना का नु शोभा निशायाः? ।
विना संस्कृतं का कला भारतस्य ? विना संस्कृतं संस्कृतिः का भुवि स्यात् ? ॥

२९ जगत्त्रयीमण्डनमस्ति भारतं तस्याप्यदः संस्कृतमेव भूषणम् ।
तस्य श्रुतिः सर्वहितैषिणी शुभा तस्याश्च भूषोपनिषच्चकास्त्यसौ ॥

३० मृतेति केचिज्जरठेति केचिन्निन्दन्त्विमां ते प्रलपन्तु नाम ।
महागजं धीरगतिं विलोक्य भषन्ति बौ बौ इति वीथिकुक्कुराः ॥

३१ विश्वे समस्तजनतासुखशान्तिसम्पद्रक्षाकरी निखिलभारतसंस्कृतेश्च ।
राष्ट्रैकताशयविशुद्धमनोनिदानं स्वाद्या सदा जगति संस्कृतवाक् सुधेयम् ॥

३२ स्तुवन्तु निन्दन्तु जनाः समर्थाः मूढोऽसि जाड्यं किमिति ब्रुवन्तु ।
वयं तु सत्संस्कृतिरक्षणाय सूपास्महे त्वां सुरवाणि ! पायाः ॥

३३ भुक्तिप्रधानाः परितो भ्रमन्तः श्रान्ता नरा भुक्तिसमाप्तिकाले ।
त्यक्ता जनैर्मानसशान्तिकामाः संस्कृत्रिमां वाचमिहाश्रयन्ते ॥

३४ सत्सारस्वतमार्यसेवितमिदं सेव्यं न हि द्राविडै –
रित्येवं सततप्रतारणचणैः कैश्चित् सदा रुध्यसे ।
तान् विघ्नान् समुपद्रवांश्च समतीत्याद्यापि जाज्वल्यसे
सर्वै र्देशविदेशवासिभिरहो गैर्वाणि ! जेगीयसे ॥

३५ धन्या भारतभूर्यदङ्कलुठनासक्त्या दिवं देवताः
त्यक्त्वा स्वीकृतमानवप्रकृतयः प्रापुः प्रमोदं परम् ।
धन्या भारतभूर्यदत्र सरितां माताऽघविध्वंसिनी
पुण्या संस्कृतवाङ्नदी सुरधुनी गर्वापहा राजते ॥

३६ धन्येयं भूर्भारताख्या त्रिलोक्यां धन्या चेयं संस्कृतिर्भारतस्य ।
धन्योऽयं यः स्वं परित्यज्य सौख्यं रक्षन्नास्ते संस्कृतं संस्कृतिश्च ॥

३७ कृता देवीप्रसादेन संस्कृतस्तवमालिका ।
वाग्देवीकण्ठभूषेयं भूयाद् बुधजनप्रिया ॥

॥ शम् ॥

****

# शब्दानां स्वरूपे शक्तिः

डा० कृ० श्यामसुन्दरः

सहायकाचार्यः, व्याकरणविभागः,

मद्रपुरीसंस्कृतमहाविद्यालयः, मयूरपुरी, चेन्नै-४

"रथन्तरं गायति" इत्यादिवैदिकप्रयोगे "अग्नेर्ढक्" [पा. सू. ४-२-३३ ] इत्यादिशास्त्रीयप्रयोगे च शब्दः शाब्दबोधे भासते इति निर्विवादम्। एवमेव 'विष्णुमुच्चारय' 'गामुच्चारय' इत्यादिलौकिकप्रयोगेऽपि शब्दः शाब्दबोधे भासते एव। यस्तावत् वृत्तिविषयः स एव शाब्दबोधे भासते नान्य इति नियमः। अन्यथा घटपदजन्यबोधे आकाशस्यापि भानप्रसङ्गः। तस्मात् शब्दस्वरूपस्यापि वृत्तिविषयत्वं कल्प्यम्। परन्तु तत्र वृत्तिः का इत्यत्र अस्ति विप्रतिपत्तिः शास्त्रकाराणाम्।

तत्र बृहत्तर्कप्रकाशादौ पदानां स्वपरत्वे लक्षणैव, न शक्तिः अन्यलभ्यत्वात् इत्याद्युक्तम्[1]। तथा हि- 'विष्णुमुच्चारय' इत्यादौ विष्णुशब्दस्य देवः नारायणः अर्थः। तस्य उच्चारणकर्मत्वासम्भवात् अन्वयानुपपत्तेः तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्य सत्त्वात् विष्णुशब्दस्य लक्षणाऽङ्गीक्रियते। लक्षणा च शब्दस्यैव उच्चारणकर्मत्वसम्भवात् स्वरूपे अर्थात् विष्णुशब्दे अङ्गीक्रियते। तेन विष्णुशब्दकर्मकम् उच्चारणं प्रेरणाविषयः इति शब्दविषयकः शाब्दबोधः सिद्ध्यति। एवञ्च लक्षणयैव शब्दानां स्वपरत्वे सिद्धे तत्र शक्तिकल्पनम् अयुक्तम्, अनन्यलभ्ये अर्थे एव शक्तिः अङ्गीकार्या इत्यर्थकात् "अनन्यलभ्यः शब्दार्थः" इति न्यायात्, इति तेषाम् अभिमतम्।

मतमिदं वैयाकरणेभ्यो न रोचते। तथाहि वृत्तिदीपिकाकाराः[२] - शब्दस्य स्वपरत्वे शक्तिरेव, न लक्षणा। "अनन्यलभ्यः शब्दार्थः" इत्यत्र अर्थशब्दो वृत्तिपरः। अतः अस्य न्यायस्य संसर्गादिना लभ्ये वृत्तिकल्पनम् अन्याय्यम् इत्यर्थः, न तु अनन्यलभ्ये अर्थे एव शक्तिः अङ्गीकार्या इति। शब्दस्वरूपस्य च संसर्गादिना अलाभात् न अन्यलभ्यत्वम्। अतः शक्त्यस्वीकारे 'अन्यलभ्यत्वात्'

1 न्या. सि. म. पृ. १९८।

2 वृत्तिदीपिका-पृ-१४।

इति यो हेतुरुक्तः सः अयुक्तः। एवञ्च शब्दस्य स्वपरत्वे शक्तिरेव न लक्षणा। यथा तेजसः ग्राह्यत्वग्राहकत्वशक्ती तथा शब्दस्यापि बोध्यत्वबोधकत्वशक्ती स्तः। दीपो यथा स्वात्मानं प्रकाशयन् घटादिकं प्रकाशयति, तथा शब्दोऽपि स्वात्मानं प्रकाशयन् अर्थमपि प्रकाशयति इति शब्दे स्वस्मिन् ग्राह्यत्वं ग्राहकत्वञ्च अस्ति। तदुक्तं भर्तृहरिणा -

" ग्राह्यत्वं ग्राहकत्वञ्च द्वे वृत्ती तेजसो यथा।

तथैव सर्वशब्दानाम् एते पृथगवस्थिते॥ "[3] इति । इत्याहुः॥

भूषणसारादिग्रन्थेष्वपि, शब्दानां स्वपरत्वे शक्तिरेव न लक्षणा इत्यत्र प्रदर्शितानि सन्ति बहूनि प्रमाणानि अनुभवः, अभियुक्तोक्तिः इत्येवमादीनि। तथाहि- 'गामुच्चारय' 'गवित्ययमाह' इत्यादौ 'गाम्' गवित्यादिशब्देभ्यः तत्तत्स्वरूपबोधः सर्वैः अभ्युपगन्तव्यः। वृत्त्युपस्थाप्यस्यैव शाब्दबोधविषयत्वात् तत्र वृत्तिः अवश्यं कल्प्या। सा च शक्तिरेव न लक्षणा। यतो हि यदि निरूढलक्षणा तर्हि सा शक्तेः अनतिरिक्तैव, अनुपपत्तिप्रतिसन्धानं विनैव बोधात्। प्रयोजनाभावाच्च न प्रयोजनवती लक्षणा वक्तुं शक्या। किञ्च 'जबगडदशमुच्चारय' इत्यादिषु समुदायस्य स्वरूपं विहाय अन्यत्र कुत्रापि शक्तेरभावेन, समुदायात् कस्याप्यर्थस्य उपस्थितिर्न स्यात्। एवञ्च शक्यस्यैवाभावे शक्य-सम्बन्धरूपा अन्वयानुपपत्तिहेतुकलक्षणा कथं वक्तुं शक्या ? अपि च नैयायिकमते भाषाशब्दानां शक्त्यभावात्, तदनुकरणे 'गावमुच्चारय ' इत्यादौ शक्यार्थाभावात् लक्षणायाः असम्भव एव।

अनुकरणशब्दविषये पक्षद्वयमङ्गीक्रियते वैयाकरणैः। अनुकरणम् अनुकार्यात् भिन्नमित्येकः पक्षः, अभिन्नमित्यन्यः पक्षः। पक्षद्वयमपि भाष्यकारसम्मतम्। तत्र प्रथमपक्षे ''आम्नायशब्दानाम् आन्यभाव्यम् " इति "मतौ छः सूक्तसाम्नोः" [पा. सू. ५-२-५९ ] इति सूत्रस्थं भाष्यम् , "अयन्त्वन्यः अपशब्दपदार्थकः शब्दः" इति ऋऌक्-सूत्रस्थं भाष्यं च प्रमाणम्। द्वितीये च "प्रकृतिवदनुकरणं भवति" इति 'ऋऌक्'-सूत्रस्थमेव भाष्यं [4] प्रमाणम्। पक्षद्वयेऽपि अनुकरणस्य अनुकार्यबोधकत्वम् अस्त्येव।

---

[3] वा. प. ब्र. का. श्लो. ५५।

[4] म. भा. १-पृ. ७३, ७४

तत्र भेदपक्षे अनुकरणस्य अनुकार्ये शब्दे शक्तिसत्त्वात् प्रातिपदिकत्वम्। तेन "एरुः" [पा.सू. ३-४-८६ ] "एचोऽयवायावः" [ पा. सू. ६-१-७८] इत्यादौ एः ,एचः इत्यादीनां सुबन्तत्वसिद्धिः। स्पष्टं चेदं "मतौ छः सूक्तसाम्नोः" [पा . सू . ५-२-५९ ] इति सूत्रे भाष्य-वार्तिक-प्रदीपेषु [5]। तत्र हि- 'अस्यवामीयम्' 'कयाशुभीयम्' इत्यादौ प्रातिपदिकत्वाभावात् छप्रत्ययो न स्यात् इति पूर्वपक्षे , वार्त्तिककारः " स्वं रूपं शब्दस्याशब्दसंज्ञेति वचनात् प्रातिपदिकत्वसिद्धिः " इति समादधौ। भाष्यकारोऽपि "योऽसावाम्नाये अस्यवामशब्दः पठ्यते सोऽस्य पदार्थः " इत्याह। योऽसावाम्नाये अस्यवामशब्दः पठ्यते सः 'अस्यवामीयम्' इत्यादौ छप्रकृतेः पदार्थः। अत एव प्रातिपदिकत्वात् छप्रत्ययसिद्धिः इति तदर्थः। " 'अस्य' 'वामस्य' इति वेदे यत् पदद्वयं पठ्यते तदेकदेशस्य अस्यवामशब्दस्य यदनुकरणम् अस्यवामशब्दः , अनुकार्येणार्थेन अर्थवत्त्वात् लब्धप्रातिपदिकसंज्ञः , तस्मादेतत् प्रत्ययविधानम् इत्यर्थः " इत्येवं कैयटेऽपि स्पष्टः अयमर्थः। एवं प्रत्याहाराह्निके ऌकारोपदेशप्रतिपादनसमयेऽपि भाष्ये - "अयन्त्वन्यः अपशब्दपदार्थकः शब्दः , यदर्थः उपदेशः कर्तव्यः। न चापशब्दपदार्थकः शब्दः अपशब्दो भवति " [6] इति अनुकरणस्य अनुकार्यार्थकत्वं स्पष्टम् उक्तम्।

हरिदीक्षितोऽपि "कृत्तद्धित.." - इति [पा० सू०-१-२-४६] सूत्रे शब्दरत्ने "भेदविवक्षायान्तु संज्ञा स्यादेव। "भुवो वुग्" [पा० सू०-६-४-८८] इति यथा" इत्यस्याः मूलपङ्क्तेः व्याख्याने "अर्थवच्छब्दोऽपि वृत्तिविषय एवैतत्पक्षे" इत्याह। यथा अर्थो वृत्तिविषयः तथा शब्दोऽपि वृत्तिविषयः इति तदर्थः।

अभेदपक्षे तु शब्दस्य श्रोत्रादिभिः साक्षादुपस्थितत्वादेव शाब्दबोधविषयता, पदप्रत्यक्षस्य विषयविधया पदजन्यत्वात्। ननु वृत्त्युपस्थाप्यस्यैव शाब्दबोधविषयता। अन्यथा समवायेन घटादिशब्दजन्योपस्थितिविषयस्य आकाशस्यापि 'घटोऽस्ति' इत्यादिवाक्यजन्यशाब्दबोधविषय-त्वापत्तिः। प्रकृते प्रत्यक्षविषयीभूतस्य शब्दस्य वृत्त्युपस्थाप्यत्वाभावात् कथं शाब्दबोधविषयता ?

---

5 म. भा.-२ भागः-४-५ पृ. ३९१-३९२।

6 म . भा.-१ पृ . ७३।

इति चेत् , उच्यते - सम्बन्धस्य उभयनिरूप्यत्वात् शब्दस्यापि आश्रयतया वृत्तिमत्त्वं सम्भवति। निरूपकताश्रयतान्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यते इति न दोषः। तदुक्तं भट्टोजिदीक्षितैः-

" शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा।

नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थो व भासते॥ " [7] इति

तद्व्याख्याने कौण्डभट्टोऽप्याह भूषणसारे- "अनुकार्यानुकरणयोः भेदे , अनुकार्यस्य पदानुपस्थितत्वात् तत्सिद्धये शक्तिरुपेया। अभेदे , प्रत्यक्षे विषयस्य हेतुत्वात् स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय शाब्दबोधविषयतोपपत्तिः। यद्यप्यतिप्रसङ्गवारणाय वृत्तिजन्यपदोपस्थितिः एव हेतुः, तथापि अत्र आश्रयतया वृत्तिमत्त्वस्य सत्त्वात् नानुपपत्तिः। निरूपकताश्रयतान्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यते इत्यनवद्यं , सम्बन्धस्य उभयनिरूप्यत्वात् , पदादर्थस्येव तद्बोधकत्वेन स्वस्यापि ज्ञानसम्भवाच्च " [8] इति। अनुकार्यानुकरणयोः भेदविवक्षायां शब्दस्यापि पृथग्भानेन प्रातिपदिकार्थत्वात् षट्कं प्रातिपदिकार्थः भवति। अनुकार्यानुकरणयोः अभेदविवक्षायां तु शब्दस्य स्वरूपेणैव भानात् न तस्य प्रातिपदिकार्थत्वम्। तेन 'गवित्ययमाह' 'भू सत्तायाम्' इत्यादिप्रयोगेषु गवादिशब्दानाम् ' अर्थवत्त्वाभावात् न प्रातिपदिकत्वम्। तस्मात् तत्र सुबुत्पत्त्याद्यभावात् पदत्वमपि नास्ति। शिष्टप्रयोगात्तु साधुत्वम् अङ्गीक्रियते। उक्तञ्च भट्टोजिदीक्षितैः-

" अत एव गवित्याह भूसत्तायामितीदृशम्।

न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम्॥ " [9] इति।

“ न केवला प्रकृतिः प्रयोक्तव्या ” इति निषेधस्य तु नायं विषयः। यतो हि तत्र प्रकृतिशब्देन प्रत्ययविधौ उद्देश्यतावच्छेदकधर्मवत्वरूपप्रकृतित्ववत एव ग्रहणम्। प्रत्ययविधौ उद्देश्यतावच्छेदकीभूतो धर्मश्च धातुत्वप्रातिपदिकत्वादिरूपः। स च उक्तरीत्या भू-गवित्यादौ नास्ति इत्यतः नायं तन्निषेधविषयः। “अपदं न प्रयुञ्जीत” इति निषेधोऽपि नात्र प्रवर्तते पदत्वयोग्ये एव पदत्वरहिते तत्प्रवृत्तेः। पदत्वयोग्यत्वञ्च पदत्वसंपादकसुप्तिङन्यतरविधायकसूत्रोद्देश्यतावच्छेदक-

---

7 वै. सि. का. २६।

8 वै . भू. सा. -१ पृ . ४३६-४३७।

9 वै . भू . सा . (२) का. २७ ।

धर्मवत्वम्। सोऽपि धर्म्मः धातुत्वप्रातिपदिकत्वादिरूप एव। तस्य पूर्वोक्तरीत्या प्रकृते अभावात् निषेधोऽयं नात्र प्रवर्तते। एवञ्च न दोषः ।

अत्रेदम् अवधेयम्- पूर्वम् अनुकार्यानुकरणयोः अभेदपक्षे शब्दस्य आश्रयतासम्बन्धेन वृत्तिमत्त्वात् शाब्दबोधविषयत्वम् इत्युक्तम्। इदानीम् अर्थवत्त्वाभावात् न प्रातिपदिकत्वम् इत्युच्यते। अतः पूर्वोक्तिविरोधः इति न चिन्तनीयम् "अर्थवत्"- सूत्रे [ पा० सू० १-२-४५ ] निरूपकतासम्बन्धेन वृत्तिमत एवार्थस्य ग्रहणात् इति ॥

[10]एवं यथा अनुकरणस्थले शब्दात् शब्दोपस्थितिर्भवति तथैव 'पटमानय' इत्यादावपि पटादिशब्देभ्यः तत्तच्छब्दोपस्थितिः भवति। परन्तु अनुकरणस्थले विशेष्यत्वेन भासमानस्य शब्दस्य, तात्पर्यवशात् अन्यत्र विशेषणत्वेन भानं भवति। तदुक्तम् "स्वं रूपं शब्दस्य" [पा० सू० १-१-६८] इति सूत्रे भाष्ये - " न वा एतत् प्रयोजनमस्ति। किं कारणम् ? शब्दपूर्वको ह्यर्थे सम्प्रत्ययः। आतश्च शब्दपूर्वकः। योऽपि ह्यसावाहूयते नाम्ना, नाम च यदानेन नोपलब्धं भवति तदा पृच्छति किं भवानाहेति। शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः। इह च व्याकरणे शब्दे कार्यस्य सम्भवः, अर्थे असम्भवः। तस्मादर्थेनिवृत्तिर्भविष्यति।" [11] इति। अस्मात् भाष्यात् शब्द-तदर्थयोरुभयोरेव शब्दाद्भानम्। यत्र च लोके 'घटमानय' इत्यादौ, शब्दे इतरपदार्थान्वयबाधः, तत्र अर्थांशे शब्दस्य विशेषणता। यत्र तु अर्थे 'विष्णुमुच्चारय' "अग्नेर्ढक्" [पा. सू. ४-२-३३] इत्यादौ इतरपदार्थान्वयबाधः, तत्र शब्दांशे अर्थस्य विशेषणता इति स्पष्टं प्रतीयते।

नागेशभट्टोऽपि विषयमिमं द्रढयति "अर्थवद्ग्रहणे नानर्थकस्य" इति परिभाषायाः व्याख्यावसरे परिभाषेन्दुशेखरे - "विशिष्टरूपोपादाने उपस्थितस्यार्थस्य शब्दं प्रति विशेषणतयान्वयसम्भवे त्यागे मानाभावः...। स्वं रूपमिति शास्त्रे स्वशब्देन आत्मीयवाचिना अर्थो गृह्यते, रूपशब्देन स्वरूपम्। एवञ्च तदुभयं शब्दस्य संज्ञीति तदर्थः। तत्रार्थो न विशेष्यः, तत्र शास्त्रीयकार्यासम्भवात्, किन्तु शब्दविशेषणम्। एवञ्चार्थविशिष्टः शब्दः संज्ञीति फलितम् "[12] इति । उक्तञ्च भर्तृहरिणाऽपि-

---

10 प्रौ. म. पृ. ३६८।

11 म. भा.-१-पृ. ६८८-६८९ ।

12 प. भा. शे. पृ. ६४-६६ ।

" न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ " इति ।

विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ॥" [13] इति च ।

अत्र कारिकायाम् इवशब्दः एवार्थकः इति ज्ञेयम् । लोके किञ्चिदपि ज्ञानं प्रत्यक्षं वा अनुमितिर्वा शाब्दं वा सर्वमपि, शब्दानुगमं विना न भासते , किन्तु शब्दसंयुक्तमेव भासते । स्वविषयत्वम् अप्रतिपन्नैः शब्दैः अर्थः न प्रतीयते इति तदर्थः । तथा च घटादिशब्दश्रवणे सति 'घटशब्दप्रतिपाद्यः कम्बुग्रीवादिमान् अर्थविशेषः' इत्येवं शब्दविशिष्ट एवार्थविषयको बोधो भवति शब्दशक्तिस्वाभाव्यात् । तत्र च वृत्तिः शक्तिरेव न लक्षणा इति वैयाकरणानां सिद्धान्तः ॥

इति शम् ।

## परिशीलितग्रन्थसूची

परिभाषेन्दुशेखरः - हैमवतीटीकोपेतः। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः। वाराणसी- १९९१।

प्रौढमनोरमा - अव्ययीभावान्तो भागः शब्दरत्न-तट्टीकात्रयविभूषितः। काशी संस्कृत सीरिज -१२५ । चौखम्बा संस्कृत संस्थान । वाराणसी।

भूषणसारसमीक्षा - राघवप्रकाशनम् । तिरुपतिः- १९९६।

महाभाष्यम् - प्रदीपोद्योतसहितम्। गुरुप्रसादशास्त्रिग्रन्थमाला-१ । वाणीविलासप्रकाशनम्, वाराणसी।

महाभाष्यम् - चारुदेवशास्त्रिकृतहिन्दीव्याख्योपेतम् ।मोतीलाल बनारसीदास्।

वाक्यपदीयम्- प्रकाश-अम्बाकर्त्रीव्याख्योपेतम् । सरस्वतीभवनग्रन्थमाला-९१। सम्पूर्णानन्दविश्वविद्यालयः।

वैयाकरणसिद्धान्तकौमुदी - बालमनोरमा-तत्त्वबोधिनीसहिता। मोतीलाल् बनारसीदास्। दिल्ली।

वैयाकरणभूषणसारः - तत्वदर्शिनीव्याख्यासमन्वितः। विजयनगरम्। आन्ध्रप्रदेशः।

वैयाकरणभूषणसारः - दर्पण-सुबोधिनी (हिन्दी) व्याख्योपेतः। व्रजजीवनप्राच्यभारतीग्रन्थमाला - ४२। चौखम्बा संस्कृत प्रतिष्ठान।

वृत्तिदीपिका - मौनिश्रीकृष्णभट्टविरचिता । सरस्वतीभवनप्रकाशनम् ।

न्यायसिद्धान्तमञ्जरी - बृहत्तर्कप्रकाशसहिता । श्रीमदम्बिकाचरणचट्टोपाध्यायद्वारा काश्यां मुद्रिता । १९४३ ।

---

13 वा . प. ब्र. का. श्लो. १२३ , ५६/१ ।

# अर्वाचीनसंस्कृतसाहित्यभूमौ श्रीरामकृष्णशास्त्रिणः

सु . उमापतिः

सहायकाचार्यः, साहित्यविभागः,

मद्रपुरीसंस्कृतमहाविद्यालयः, मयूरपुरी, चेन्नै- 4

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इति ऋग्वेदे जीवपरमात्मनोरभिधानं विनैव प्रतिपादितत्वादतिशयोक्तिरभिप्रेता।

' आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिन्तु सारथिं विद्धि मनःप्रग्रहमेव च॥ '

इति कठोपनिषन्मन्त्रे रूपकालङ्कारश्च दृश्यते। इत्थं वेदादारभ्य ये दृश्यन्ते अलङ्कारादयः तेषां लक्षणकथनार्थमेवायातमिदं साहित्यशास्त्रम्। शास्त्रमिदं यद्यपि काव्यशास्त्रम् अलङ्कारशास्त्रम् इति प्राप्तप्रथम् तथापि 'सहितयोर्भावः साहित्यम्' इति व्युत्पत्या, तन्नाम्ना वरीवर्ति। किञ्च यथा वेतरेषां शास्त्राणां मुख्यलक्ष्यं भिन्नरूपेणाभिधीयते, तथैवास्यापि परममुद्देश्यं 'रसास्वाद' इति उररीक्रियते काव्यप्रकाशकृता 'सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतम्' इति । रसास्वादस्य च ब्रह्मानन्दसहोदरत्वं निर्णीय, तत्प्राप्त्युपायकत्वेन शास्त्रमिदं प्रवर्तितं भरतमुनिप्रभृतिभिः। तादृशेऽस्मिन् शास्त्रे प्रयत्नवन्तः बहवः कवयोऽभूवन् , भवन्ति, भविष्यन्ति च । यथा वा प्राचीनाः वाल्मीकिभासकालिदासादयः, तथाऽर्वाचीनकवयो वर्तन्ते राजचूडामणिदीक्षितः , रामभद्रदीक्षितः , चोक्कनाथ इत्यादयोऽनेके । तत्रापि विंशतिशताब्द्यामस्याः भाषायाः कवितारसानुभवदातारो नैकें। किञ्च कालवशेन संस्कृतसाहित्यभूमावपि नावीन्यमिच्छन्तः सत्कवयः 'हाइकुकाव्यम्' अपि लिखन्ति।

अधुनापि न केवलं भारते, अपि तु समस्ते विश्वे संस्कृतविजयपताका प्रकाशते एव । शापेनहावरमहोदयः, आल्डस-हसले महोदयः, इमर्सनमहोदयः आदिपाश्चात्त्याश्च स्वनिर्मित-ब्रह्मनामकादिकाव्यैरौपनिषदं तथ्यमाविष्कुर्वन्ति। भारते च छज्जुरामशास्त्रिणः, डा. रमेशचन्द्रशुक्लः, हरिदाससिद्धान्तवागीशादयः महाकाव्यरचयितारः प्राचीनकथाधारेण। आधुनिककथाधारेण महाकाव्य-निर्मातारः सन्ति सुबोधचन्द्रपन्तः, श्रीपद्मशास्त्रिणः, मधुकरशास्त्रिणः, परमेश्वरदत्तत्रिपाठिनः, सत्यव्रतशास्त्रिणः इत्यादयः। एतादृशाः विशालभारतम् , इन्दिरागान्धिचरितमित्यादि आधुनिकविषया-धारेण निर्मान्ति काव्यानि ।

किञ्च कालानुरोधेन नानाविधकाव्यानि विरच्यमानानि वर्तन्ते यथा चित्रकूटस्थरामानन्दाचार्य, तञ्जापुरी ना. वेङ्कट्रमणादिभिर्विरचित लघुवर्णकाव्यानि , पं. शिवजी उपाध्यायादिरचित दृश्यकाव्यानि , वनमाली विश्वाल , सीतानाथाचार्यादिरचित गीतिकाव्यानि , विडम्बनीरीत्या (पैरोडीरीत्या) हरिभद्रशर्मा , रामावतारशर्मादीनां धूर्ताख्यानादि परिहास्यकाव्यानि, चेतनांप्रवाहरीत्या (stream of consciousness) अरविन्द, केशवचन्द्रदाशादीनां कनीयसीत्यादिकाव्यानि, हर्षदेवो माधव, रवीन्द्रनाथादीनां हाइकुकाव्यानि, अण्णङ्गराचार्य, एच्.वि.नागराजराव् , के.टी.पाण्डुरङ्गि, वेङ्कटराघवाचार्य, श्रीरामदेशिकन्नार्यादीनाम् इतरभाषाग्रन्थानां संस्कृतानुवादकाव्यानीति कवितावल्याः कथनमपि दुःशकमत्र।

किञ्च, यथा रामजी उपाध्यायः, जग्गूबकुलभूषणमहाशयः, डा. रेवाप्रसाददि्ववेदी, डा. रमाकान्त शुक्लः, प्रो. राधावल्लभत्रिपाठी इत्यादयो महाकवयः प्रसिद्धाः उत्तरभारते, तथैव प्रथिताः एते दक्षिणभारते श्रीपादशास्त्रिणः, पं. क्षमारावः(स्त्री), बालकृष्णभट्टः, शिवरामशास्त्रिणः, स्वामिनाथ आत्रेयमहाशयाः, वै.महालिङ्गशास्त्रिणः, डी.टी.ताताचार्याः, वे.राघवन् महाशयाः, **श्रीकृष्णप्रेम्युपाह्वश्रीरामकृष्णशास्त्रिणः** इत्यादयः।

**कविपरिचयः**

नानाविषयप्रसिद्धे द्रविडदेशे विंशतिशताब्याः उपान्ते अर्थादाङ्गलजनपरतन्त्रभूते भारते बहवः सुब्रह्मण्यभारती, सुब्रह्मण्यशिवः इत्यादयो देशभक्ताः, कडलङ्गुडि नटेशशास्त्रिणः, पण्डितराज यस्. सुब्रह्मण्यशास्त्रिणः, पण्डितराज वि. सुब्रह्मण्यशास्त्रिणः, पोलकम् रामशास्त्रिणः आदि शास्त्रपण्डिताः, हेच्. यस्. पाठक्, गुरुपाद् के. हेग्डे , अरयर् श्रीरामशर्मा आदि कवयश्चासन् केचन वर्तन्ते इदानीमपि। तेषु अन्यतमाः एते विश्वामित्रगोत्रोत्पन्नाः श्रीरामकृष्णशास्त्रिणः। कुम्भकोणजनपदनिकटवर्ती 'शेङ्गनूर्' ग्रामः एव एतेषां स्थानम् । श्रीनारायणशास्त्रिणः प्रपौत्राणां , श्रीवेङ्कटरामशास्त्रिणः नप्तृणां , श्रीरामशेषशास्त्रिणः पौत्राणामेतेषां पितरौ श्रीवेङ्कटरामशास्त्रीश्रीमतीपार्वतीअम्माळ् इति, स्वपितरावुद्दिश्य **भक्तरत्नावलिनामके** ग्रन्थे लिखितं तैरेवः--

**माता सा मे पार्वती लोकपूज्या तातः श्रीमान्वेङ्कटेशो महात्मा।**

**कारुण्येनैवानयोः कृष्णभक्तिं जानाम्येवं साधुसङ्गे च सख्यम्॥** इति ।

बलवर्षे श्रावणमासेऽष्टम्यां तिथौ रोहिणीनक्षत्रे शुक्रवासरे (आङ्गलवर्षमानेन ३१/०८/१९३४) जाताः प्रेमिकेन्द्राः। एतेषां जन्मस्थानमपि 'शेङ्गनूर्'ग्राम एव। उचितवयस्युपनीताः 'तिरुप्पनन्दाळ्'

श्रीमुत्तुकृष्णघनपाठीतो कञ्चित्कालं वेदाध्ययनं चक्रुः। ततः स्वपितुः श्रीशिवकृष्णशास्त्रीतोऽपि काव्यपाठान्पेठुः। ततः स्वपितुः सकाशादेव बोधायनाश्वलायनापस्तम्बसूत्रेषु पूर्वापरप्रयोगान् ज्ञात्वोपाध्यायकरणेऽपि समर्था बभूवुः। अध्ययनकाल एव एतेषां प्रतिभाऽनन्यसाधारणी आसीत्। बाल्य एव वयसि एतैर्विरचितान्ग्रन्थान्दृष्ट्वा महान्तो विद्वांसोऽप्याश्चर्ययुक्ता बभूवुः।

कविकृतयः

प्रायः पञ्चपञ्चाशदधिका ग्रन्थाः आरचिताः। आबालात् विद्वत्पर्यन्तं सर्वोपकारकाः, नानाशास्त्रसम्बद्धाः, स्तोत्ररूपाः, गीतरूपाः, इतिहासरूपाश्च विराजन्ते एतेषां रचनाः। एतेषु केचन प्रकाशिताः केचनाप्रकाशिताश्च। तत्र **स्तोत्रसम्बद्धाः** *लघुस्तोत्रमाला, बृहत्स्तोत्रमाला (गोविन्दकथामृतम्, रामकथामृतसारः, सम्प्रदायशिक्षा, सुदिनप्रकाशिका, आत्मनिवेदनम्, भक्तरत्नावलिः, भक्तकोलाहल-स्तोत्रम्, भक्तपुरीशस्तवः)* **काव्यसम्बद्धाः** *श्रीरुक्मिणीपरिणयमहाकाव्यम्, श्रीजानकीविजयमहाकाव्यम्, वसन्तोत्सवनाटकम्, श्रीराधिकाविलासचम्पूः;* **भक्तिसम्बद्धाः** *भक्तिपाठः, हरिभक्तिमञ्जूषा, प्रेमिकगीता, कृष्णभक्तिरसोदयः;* **चारित्रकसम्बद्धाः** *वैष्णवसंहिता, अध्यात्मभारतम्, सतीविजयम्, श्रीव्यासविजयम्;* **पुराणसमानाः** *बृन्दावनमाहात्म्यम्, दिव्यदेशवैभवम्,* **धर्मशास्त्रसम्बद्धाः** *भागवतधर्मशास्त्रम्, प्रयोगपद्धतिः;* **शास्त्रसम्बद्धाः** *शब्दरूपनिरूपणम्, साहित्यसरणिः, वेदान्तकल्पफलम्, श्रीमदाचार्यहृदयम्, न्यायनलिनी, मीमांसामञ्जरी, अधिकरणसारस्तवः, वेदविज्ञानम्;* **आगमसम्बद्धाः** *श्रीकोलाहलब्रह्मोत्सवपद्धतिः;* **बालसम्बद्धाः** *संस्कृतबालपाठमाला* इति संस्कृतग्रन्थाः; एवमेव **गीतरूपेण** *गोविन्दशतकम्, युगलशतकम्, रङ्गशतकम्, राधिकाशतकम्, कीर्तनावलिः, तीर्थशतकम्, राधामाधवशतकम्, द्वादशनामकीर्तनानि, गीतावली, भजनसङ्ग्रहः, सन्देशगीतम्, गोदाप्रबन्धम्, मङ्गलाशासनम्, विजयपञ्चकम्, हरिकथामृतलहरी, श्रीराधाकृष्णविवाहोत्सवपद्धतिः* इति संस्कृते कीर्तितानि। एवमेव तेलुगु, कन्नड, हिन्दी, मराठी, तमिल्भाषास्वपि कीर्तनानि कृतानीति एतेषां ग्रन्थावलिरेव वाचा वक्तुं नालं भवति। एतेषु साहित्यसम्बद्धाः पञ्च ग्रन्थाः–श्रीरुक्मिणीपरिणयमहाकाव्यम्, श्रीजानकीविजयमहाकाव्यम्, श्रीराधिकाविलासचम्पूकाव्यम्, वसन्तोत्सवनाटकम्, साहित्यसरणिः इति।

i) श्रीरुक्मिणीपरिणयमहाकाव्यम्

दिव्यदम्पत्योः श्रीरुक्मिणीकृष्णयोर्विवाहविषयकमिदं काव्यं श्रीरुक्मिणीपरिणयमहाकाव्य-नाम्ना प्रबन्धितमस्ति श्रीप्रेमिकैः। सर्गचतुष्टयात्मके महाकाव्येश्रीरुक्मिण्याः अवतारस्थलस्य विदर्भदेशस्थकुण्डिननगरस्य प्रस्तावनापूर्वकवस्तुनिर्देशात्मकमङ्गलाचरणपद्धत्या प्रारम्भः कृतः ग्रन्थकारैः। शृङ्गारितरसराजशृङ्गारविलसितेऽमुष्मिन् काव्ये नानालङ्कार- ध्वनि - रस- गुणविषयाः प्रदर्शिताः सन्ति सुकुमारनयेन।

ii) श्रीजानकीविजयमहाकाव्यम्

श्रीमद्वाल्मीकिविरचितश्रीमद्रामायणस्योत्तरकाण्डकथाऽत्र प्रमुखवस्तु वर्तते। सर्गैकादश-घटितप्रबन्धेऽमुष्मिन्नायकस्य श्रीरामस्य सन्निधौ मुनिगणविशदीकृतदशाननयशःपुञ्जश्रवणजनित-सन्तापः सन्दीपितलङ्को वायुनन्दनः श्रीरामगुणगणाकर्णन तत्परोऽगाद् वारुणेराश्रममित्यारभ्य अन्ते रामायणलेखनप्रीत्युपायनप्रार्थितप्राचेतसप्रार्थनयाङ्गीकृतसीतासङ्गमेन श्रीरामेण सहावतस्थे श्रीसीता इत्युत्तरकाण्डकथा सरसया रीत्या, सरलया पद्यावल्या, रसिकवरैः श्रीप्रेमिकेन्द्रैः सुष्ठु प्रतिपादिता।

iii) श्रीराधिकाविलासचम्पूकाव्यम्

उल्लासविंशत्युल्लसितायामस्यां श्रीराधिकाविलासचम्प्वां साक्षाच्छ्रीरूपिण्या श्रीराधायाः जननादारभ्य श्रीकृष्णेन सहोद्वाहपर्यन्तं कथा प्रस्तुता अतीव सुललितसुन्दरसुमधुरगद्यपद्यांशैः। प्रायः औत्तरीयग्रन्थकथानुसारिणी वर्तते इयं चम्पूः। रसराजशृङ्गारमण्डितेऽमुष्मिन् काव्ये नायिकाभूतायाः श्रीवृषभानुकुमार्याः प्राधान्येन चित्रणं क्रियत इति श्रीराधिकाविलास इति सार्थकं नाम। नायकश्च श्रीकृष्णः। द्वयोः परस्परानुरागपरिणयादिविषयाः सरसतया समुपपादिताः सन्ति। अत्रापि चम्पूकाव्यलक्षणानुसारं गद्यपद्यमिश्रण - अलङ्कार - ध्वनि - रस - विषयाः सम्यक् निरूढाः।

iv) वसन्तोत्सवनाटकम्

'काव्येषु नाटकं रम्यम्' इति सूक्त्या सुष्ठु ज्ञायते यत् श्रव्यात् दृश्यं काव्यं चित्ताकर्षकम्, अधिकेन्द्रियव्यापारवत्वात्। अतः श्रव्यकाव्यनिर्मातृभिरप्येतैराचार्यैः निरमायि किञ्चिद्दृश्यं काव्यं यत् नाम्ना वसन्तोत्सवनाटकम् इति। अङ्कत्रयसहितस्यास्य रूपकस्य नाटकत्वं सर्वजनव्यवहारसामान्यात् भवति। अत्र नायकः श्रीकृष्णः। नायिकाश्च राधिकाप्रभृतयो गोपिकाः नव। अङ्गी रसश्च शृङ्गारः। इतिवृत्तं प्रसिद्धम्। नाटकेऽस्मिन् नानाविधालङ्काराः रसाः, सरसं भक्तिवर्धनपूर्वकं निरूढाः रसिकेन्द्रैः। बहुत्र

नेपथ्यमुखेन स्वेष्टां कथां पुरतो नयन्ति एते । अत्र ' प्रत्यक्षमिव दर्शितम् ' इति कथनापेक्षया 'प्रत्यक्षं दर्शितम्' इति युक्तं वक्तुम् । अतीवोत्कृष्टस्य कृष्णप्रेमरसस्य आस्वादनं कारितमनेन दृश्यकाव्येन काव्यकृद्भिः। एवं राधाकृष्णप्रेमभक्तिं दृश्यकाव्यरूपेण प्रेक्षकान् सहृदयांश्च पाययन्तः विलसन्तितराम् ।

**v)** साहित्यसरणिः

**'अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथास्मै रोचते विश्वं तथा तत्परिवर्तते॥'**

इत्यानन्दवर्धनवचनं वर्तते प्रसिद्धतया, न तावता कवयः सर्वथा निरङ्कुशाः कल्पनायामिव , अपितु तेषामपि नियमाः सन्ति काव्यकरणे इति खलु आभरतमुनेः पण्डितजगन्नाथादिपर्यन्तं लक्षणग्रन्थाः अर्थात् प्रकरणग्रन्थाः विरचिता विराजन्ते। एतादृशलक्षणग्रन्थकर्तृषु न सर्वेऽपि कवयोऽन्तर्भवन्ति । किं बहुना ? कविकुलगुरुकालिदासोऽपि दृश्यश्रव्यादिकाव्यरचयिता एव , न तु काव्यलक्षणप्रबन्धकर्ता। केचन कवयः ईदृशा भवन्ति यत्ते लक्षणग्रन्थमात्ररचयितारः यथा विद्यानाथादयः। परमयमस्ति विशेषोऽत्र यदेते कवयः श्रीरुक्मिणीपरिणयादिपद्यकाव्य - श्रीराधिकाविलासचम्पूकाव्य - वसन्तोत्सवनाटकादि – दृश्यश्रव्यकाव्य-कर्तारः सन्तः , तल्लक्षणग्रन्थमपि साहित्यसरणिनामकं प्रणिन्युः ।

अस्मिन् *साहित्यसरणि*ग्रन्थे वर्तन्ते षट् परिच्छेदाः । तें च काव्य – वृत्त – अलङ्कार – नायक – रस - रति निरूपणाख्याः। अत्र शताधिकवृत्तानि, शताधिका अलङ्काराः, भक्तिरसेन सह नवाधिकरसाश्च इतराचार्यविलक्षणतया सम्यक् निरूपिताः ।

लोके एतादृशमहान्तोऽतिविरला ये सर्वशास्त्रनिष्णाता अपि भक्तिमार्गपरायणाः यथा श्रीमदप्पय्यदीक्षित-वेदान्तदेशिकादयोऽवर्तन्त । परमेते श्रीश्रीकृष्णप्रेमिमहात्मानः सकलशास्त्रेषु प्रणीतप्रबन्धाः सन्तः, साहित्यिकग्रन्थान् काव्यान्यपि च कृत्वा , तत्रापि भक्तिरसं प्रपूर्य ऐहिकसौख्यमामुष्मिकानन्दञ्च प्रददति। 'भक्तिर्मुक्तेर्गरीयसी' इति भक्तिमार्गमवलम्बमाना एते वास्तविकं रसानुभवं काव्यद्वारा वितरन्ति ।

किञ्च काव्येषु नानालङ्कार - रस - ध्वनि - धर्मविषयोपादानेन साहित्यशास्त्रसंसारे महद्योगदानं दत्वा तेषु भक्तिरसमपि पाययित्वा सहृदयान् निमज्जयन्ति कृष्णानन्दसागरे इत्यनितरसाधारणं श्रैष्ठ्यं च वर्तते एषाम् ।

किञ्चामीषां नानाशास्त्रसंबद्धग्रन्थाः तत्तच्छास्त्रविद्यार्थिनामनुसन्धानकर्मणेऽपि सुयोग्याः भवन्तीति हेतोः न केवलं साहित्यस्य, अपि तु संस्कृतवाङ्मयस्यैव महद्योगदानं दत्तं वर्तते एतैः॥

# यज्ञसंरक्षणम्

Dr. V. Bhanumathy

Asst.Professor & HOD of Sanskrit,

Queen Mary's College

दशरथस्य पुत्राः राजकुमाराः रामलक्ष्मणभरतशत्रुघ्नाः धनुर्विद्यायाम् , अस्त्राभ्यासे , मल्लयुद्धे , अश्वगजादियुद्धकलायां च कुशलाः निपुणाः च अभवन् । अनेन दशरथः बहुसन्तुष्टः अभवत् । यदा ते युवकाः सञ्जाताः तेषां विवाहं कारयितुं योग्यवधूनां चयनकर्मणि मन्त्रिभिः सह आलोचनां कर्तुमारभत । तस्मिन् समये विश्वामित्रः ऋषिः दशरथं द्रष्टुम् आगतवान् इति ज्ञात्वा वसिष्ठः अवदत् । 'इदानीं वयं राजकुमाराणां विवाहविषये आलोचनां कुर्मः। अस्मिन् समये विश्वामित्रमहर्षेः आगमनं शुभनिमित्तं सूचयति' इति । अनेन बहुसन्तुष्टः दशरथः अतीव श्रद्धया भक्त्या गौरवेण च विश्वामित्रस्य स्वागतमकरोत्। सः विश्वामित्रं प्रणम्य एवमवदत्, भवतः पादरजसा राज्येऽस्मिन् सर्वाः अपि समृद्धयः भूयासुः इति आशीर्वदन्तु इति । विंश्वामित्रः अपि तम् आशास्य भवतः साहाय्यं याचितुमागतोऽस्मि इति च अवदत् । तदा दशरथः "विश्वामित्राय मया किमपि कर्तव्यमस्ति" इति सन्तुष्टः, यत्किमपि पृच्छतु , अहं भवतः इच्छां पूरयामि इति वचः दत्तवान् । ततः विश्वामित्रः अवदत् 'दशरथ! अहमेकं मुख्यं यागं कर्तुमुद्यतः अस्मि । परं ताटका, मारीचः सुबाहुः इत्यादयः राक्षसाः तस्य विघ्नं कर्तुं यतन्ते । तैः प्राप्तैः वरैः तान् राक्षसान् जेतुमशक्तः अस्मि । अतः मम यागसंरक्षणार्थं तव पुत्रौ रामलक्ष्मणौ प्रेषयतु । अहं रामं विशिष्टानामस्त्राणां अभ्यासं कारयित्वा वीरश्रेष्ठं करिष्यामि । अनेन तव यशोपि वर्धते।

विश्वामित्रस्य वचः श्रुत्वा स्वकर्णयोः असह्यध्वनिं श्रुतवानिव अतीव खिन्नः अभवत् । बहुकालं तपः कृत्वा प्राप्तौ कुमारौ दयां विना राक्षसैः सह युद्धं कर्तुमाह्वयति इति चिन्तयन् अत्यधिकं दुःखितः भूत्वा तमवदत् "मम बालकौ अतीव अल्पवयस्कौ , धनुर्विद्यायां शास्त्राभ्यासे च नातिकुशलिनौ , राक्षसाः तु मायाविनः , तैः सह युद्धं कर्तुमशक्तौ । अतः क्षम्यताम् , अहं स्वसैन्येन आगत्य भवतः यागरक्षणं करोमि इति । मम कुमारौ न प्रेषयितुं शक्नोमि " इति । एवमुक्त्वा विश्वामित्रस्य पादयोः पतित्वा अयाचत्।

नैसर्गिकेन क्रुद्धस्वभावयुक्तः विश्वामित्रः भृशं कुपितः "राजन् !" इति गर्जितः 'यत्किमपि पृच्छतु अहं करोमि' इति वचः दत्वा इदानीं स्ववचसः लङ्घनं करोषि, वचसः परिवर्तनं च करोषि, सत्यं यो लङ्घयति तस्य गतिः कीदृशी भवति इति त्वं न जानासि? इत्यपृच्छत् ।

"विश्वामित्रः कोपेन किमपि शप्स्यति" इति भीतं किङ्कर्तव्यमूढं दशरथं दृष्ट्वा वसिष्ठः तम् एवं सान्त्वयामास, दशरथ ! विश्वामित्रः असाधारणतपस्वी, लोकेऽस्मिन् तेन असाध्यं कार्यं किमपि नास्ति। स एव तव पुत्रौ विश्वसन् तौ याचति चेत् तत्तव पुत्रयोः कल्याणाय एव इति जानातु । तव वचः पालयन् रामलक्ष्मणौ महर्षिणा सह प्रेषयतु , तौ किमपि क्लेशं विना प्रत्यागमिष्यतः इति ।

वसिष्ठवाक्यैः सान्त्वितः दशरथः रामलक्ष्मणौ विश्वामित्रेण सह प्रेषयितुमङ्गीचकार। रामोऽपि पितरौ गुरून् च अभिवाद्य विश्वामित्रेण सह प्रस्थितः।

विश्वामित्रः भरतशत्रुघ्नौ विना रामलक्ष्मणौ एव स्वकार्यं साधयितुं वनं नेतुम् अयाचत, यतो हि रामः सत्वगुणयुक्तः चित्, लक्ष्मणः रजोगुणयुक्तः मनः। मनुष्यस्य मनः रजोगुणे एवं कार्यं करोति। सत्वगुणयुक्तः चित् सदैव मनसः वशे एव लीयते । अत एव चित्तमनसोः अविनाभावसंबन्धः भवति। अनेनैव रामलक्ष्मणौ सहैव भवतः। भरतशत्रुघ्नौ तु बुद्धि-अहङ्कारतत्त्वगुणयुक्तौ । अतः एव विश्वामित्रः रामलक्ष्मणावेव यागरक्षणार्थम् अयाचत्।

सरय्वाः दक्षिणतटे प्राप्ते सति विश्वामित्रः रामं , श्रीराम ! इति सस्नेहमाहूय,

**क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलां चैव पठतः पथि राघव॥**

**एतद्विद्याद्वये लब्धे भविता नास्ति ते समः । बलाचातिबला चैव सर्वज्ञानस्य मातरौ ॥**

इति प्रशंसापूर्वकं बलातिबले विद्ये तयोः उपदिदेश । लघुवयस्कयोः बालकयोः मात्रा परिरक्षणमनिवार्यं भवति। यदि तौ राजगृहे भवेतां तयोः मात्रा परिपोषितयोः क्षुत्पिपासयोः अनुभवः नैव भवेदेव । अतः विश्वमित्रः तयोरुपरि मातृवात्सल्यं प्रदर्शयन् बलातिबलौ उपदिष्टवान् स्यात्। गमनसमये मार्गे स्थितानामश्रमाणां तत्रोषितानां ऋषीणां च कथाः श्रावयन् तयोः यथा श्रमः नोत्पद्यते, तथा परिरक्षन् नीतवान्। यदा ते नदीं तर्तुमुद्यताः तदा भयानकं शब्दमेकं शुश्रुवुः । रामः बालकस्वभावेन तच्छब्दस्य कारणजिज्ञासुः " अयं ध्वनिः अत्र किमर्थं जायते?" इति विश्वामित्रम् अपृच्छत्। विश्वामित्रोऽपि मानसरोवरे अयमतुलशब्दः वारिसंक्षोभजः तं प्रणम इत्युक्तवान् । ततः च अग्रे गच्छन् दुर्गं दारुणं वनं दृष्ट्वा किम् इदं वनमिति अपृच्छत्। विश्वामित्रः तस्य वनस्य पूर्ववृत्तान्तमुक्त्वा "वनेऽस्मिन् ताटका नाम राक्षसी प्रतिवसति। मतियोगात् तां दुष्टचारिणीं जित्वा देशमिमं पुनः निष्कण्टकं कुरु" इत्यवदत्।

तच्छ्रुत्वा चकितः रामः प्रायः यक्षास्तु स्वल्पवीर्याः इति श्रूयन्ते। परं कथमेका स्त्री ईदृशं बलं धारयति? इति स्वसंशयं प्रदर्शितवान् । तेन प्रश्नेन सन्तुष्टः विश्वामित्रः सामान्यमनुष्याणामपेक्षया यक्षाः

असुराः च अतीव बलशालिनः। किञ्च अघोरमपि तपः कर्तुं शक्तौ। मनुष्येन तपः सिद्ध्या कर्तुमशक्तमपि कार्यं ते निर्भयं कुर्वन्ति। स्वकार्यसिद्धये यागाहुत्यां स्वहस्तं पादं रक्तं मांसं, किं बहुना? स्वशिरः अपि समर्पयितुं सन्नद्धाः भवन्ति। एतादृश असहायशूरत्वात् तैः कृतेन तपसा च तृप्ताः देवताः तैः पृष्टं यत्किमपि वरं यच्छन्ति। प्राप्तेन वरेण इतोऽपि गर्विताः ते उद्धताः तान् जेतुं लोकेऽस्मिन् कोऽपि नास्ति इति मत्या सर्वानपि हिंसित्वा आनन्दमनुभवन्ति। यागकर्तॄन् ऋषीन् मुनीन् च दृष्ट्वा तेषां यागस्य नाशने अत्यधिकां प्रीतिं प्रदर्शयन्ति। तान् च शत्रुवत् हिंसयन्ति, तेषां क्रूरव्यवहारेण तेषां यागशालामपि नाशयन्ति" इति। ततः ताटकायाः च कथां ताभ्यां श्रावयित्वा तां दुर्वृत्तां निहन्तुं त्रिषु लोकेषु त्वां ऋते कश्चित् पुमान् नोत्सहते। ततश्च अस्याः विषये स्त्रीवधनिमित्ता घृणा अपि न कार्या इति तं पुनः प्रोत्साहितवान्। ततोइ रामः तस्याज्ञापालने दत्तचित्तः ताटकावधाय धनुर्मध्ये मुष्टिं बध्वा तीव्रं ज्याघोषमकरोत्। तेन शब्देन मोहिता ताटका क्रोधमूर्छिता कुतश्चित् राममभ्यधावत्। तदा विश्वामित्रः हुङ्कारेण तामभिभर्त्स्य राघवयोः स्वस्तिर्भवतु इत्याशिषं जगाद। ततः ताटकारामयोः मध्ये भयङ्करं युद्धं सम्वृत्तम्। रामविसृष्टेन एकेन शरेण सा भूमौ पपात। तदा ताटकावधतोषितः मुनिवरः रामं मूर्ध्नि उपाघ्राय 'अद्य रात्रावत्रैव स्थित्वा श्वो ममाश्रमपदं गमिष्यामः' इत्युवाच। ततः प्रभाते राघवं प्रशस्य दिव्यं दण्डचक्रं , धर्मचक्रं, कालचक्रं , विष्णुचक्रं , वज्रायुधं , पाशुपतं, ब्रह्मशिरः, अस्त्रमैषीकं, देवचक्रं, ब्रह्मास्त्रं, मोदकी, शिखरी इति द्वे गदे एवं बहूनि दिव्यानि अस्त्राणि तस्मै प्रीत्या ददौ। विश्वामित्रेण प्रदत्तानि सर्वाण्यपि अस्त्राणि प्रतिगृह्य रामः,

**गृहीतास्त्रोऽस्मि भगवन्दुराधर्षः सुरैरपि। अस्त्राणां त्वहमिच्छामि संहारं मुनिपुङ्गव ।**

इति प्रार्थितवान् विश्वामित्रोऽपि प्रीत्या तस्मै सर्वाः अपि विद्याः व्याजहार।

ततः ते सिद्धाश्रमं प्राप्ताः। तत्र विश्वामित्रः राममेवमुवाच, राम! अस्य स्थलस्य नाम सिद्धाश्रमः। नरनारायणौ तपसः श्रेष्ठत्वं प्रति मनुष्याणां कृते अत्रैव बोधितवन्तौ। महाविष्णोः वामनावतारः अत्रैव आसीत्। अत्रैव प्रह्लादस्य पौत्रः महाबलिः यागशालायां इन्द्रस्य बलं स्थगितवान्। महाबलिं जेतुं वामनः त्रिविक्रमावतारं स्वीकृत्य महाबलेः शिरसि तृतीयं पादं संस्थाप्य तं पाताले पातयित्वा देवलोकमररक्षत्। अतः इदमेव मम यागकर्मणः योग्यं पवित्रं च स्थानं मन्ये। अतः त्वं असुरैः मम यागस्य भङ्गः यथा न भवेत् तथा रक्षां कुरु।

सिद्धाश्रमवासिनः ऋषयः सर्वे विश्वामित्रस्य पूजां तथा राजपुत्रयोः अतिथिसत्कारं च अकुर्वन्। ततः यज्ञदीक्षितं विश्वामित्रं तपोवनञ्च षडहोरात्रं रामलक्ष्मणौ ररक्षतुः। सप्तमे अहनि यागसमये वेदिः

ससमित्कुसुमोच्चया सर्त्विजा विश्वामित्रेण सहिता जज्वाल। तदा आकाशे महान् शब्दः अजायत। यथा वर्षाकाले मेघः आकाशम् आवार्य दृश्यते तथा मायारूपिणौ राक्षसौ मारीचः सुबाहुश्च बृहत्सैन्येन सह आगत्य रक्तं मांसमित्यादीन् यागाग्नौ निक्षिप्य यागस्य भङ्गं कर्तुमुद्यतौ । तदा क्रुद्धः रामः मानवं परमभास्वरं परमोदारमस्त्रं मारीचं प्रति चिक्षेप। तच्च मारीचं योजनसहस्रमतिक्रम्य पातयामास। मानवास्त्रेण मारीचस्य बुद्धिरेव मोहिता। परं न हतः। सः तु ततः पलायितवान्। आग्नेयास्त्रेण रामः सुबाहुं हतवान्। किञ्च इतरानपि निर्घृणान् राक्षसान् यज्ञघ्नान् रुधिराशनान् च वधिष्यामि इत्युक्त्वा वायव्यास्त्रं प्रयुज्य सर्वानपि राक्षसान् जघान । एवं श्रीरामलक्ष्मणौ विश्वामित्रस्य यागरक्षणं कृतवन्तौ।

"यज्ञो वै विष्णुः" इत्युक्तेरनुसारं स्वयं रामरूपी महाविष्णुः रामायणे यज्ञसंरक्षणमकरोत्॥

*****

| |
|---|
| औषधान्वेषणक्लेशैः भृशमुत्क्लिश्यते कुतः।<br>रुगब्धितरणे हेतुं तरणिं शरणीकुरु॥ |

# दशरथस्य धर्मनिष्ठा

C. HARIHARAN

Asst. Prof.The Madras Sanskrit College

Mylapore, Chennai - 600004

श्रीमद्वाल्मीकिरामायणे केषाञ्चन सन्दर्भाणाम् आपाततः अवलोकनेन दशरथस्य धर्मनिष्ठायां संशयः उदियात्। तादृशसन्दर्भाणां विवरणपूर्वकं संशयम् उत्थाप्य युक्तिपूर्वकं दशरथस्य धर्मनिष्ठां संस्थापयितुं प्रक्रान्तोऽयं यत्नः।

कैकेय्याः विवाहावसरे दशरथः कैकेय्याः पितुः निकटे स्वराज्यं शुल्करूपेण ददामि इति वाचं दत्तवान् इति रामः भरतं कथयति। अयं सन्दर्भः चित्रकूटे रामभरतसंवादप्रसङ्गे दृश्यते। स्वीयं वनवासं निवारयितुं भरते यतमाने तमेव सिंहासनार्हं सूचयता रामेण एवम् उच्यते ,

"[14]पुरा भ्रातः पिता नः स मातरं ते समुद्वहन्।

मातामहे समाश्रौषीद् राज्यशुल्कमनुत्तमम्"॥ इति।

अत्र 'मातामहे समाश्रौषीत्' इति वचनेन यद्यपि केकयराजाय राज्यं दातव्यम् इति भाति तथापि तत्काले एव राज्यस्वीकरणे योग्याय तस्मै न दत्तम् इति कारणात्पूर्वोक्तवचनस्य एवं तात्पर्यं स्वीकर्तव्यं यत् अस्याम् उत्पत्स्यमानाय राज्यभारवहनाय उचितवयःप्राप्त्युत्तरं ददामि इति।एवञ्चेद् वस्तुतः भरते अभिषेचनीये, कुतः दशरथः रामं अभिषेकाय सज्जीकरोति ? इति शङ्का उत्तिष्ठते। न केवलमेतावदेव। दशरथः रामाय राज्यदाने कृतनिश्चयः सन् "भरतागमनात्पूर्वं तव अभिषेकः भवतु" इति रामं वदति। तद्यथा,

"[15]विप्रोषितश्च भरतः यावदेव पुरादितः। तावदेवाभिषेकस्ते प्राप्तकालो मतो मम॥

कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः।ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः॥

किंतु चित्तं मनुष्याणाम् अनित्यमिति मे मतिः। सताञ्च धर्मनित्यानाङ्कृतशोभि च राघव॥" इति।

---

[14]अयोध्याकाण्डे सर्गः 107 श्लोकः२

[15]अयोध्याकाण्डे सर्गः 4 श्लोकः 25 - 27

एवं चेद् विवाहकाले मातामहे प्रतिश्रुतं राज्यं भरतः स्वीकर्तुमिच्छेत् इति भिया एव दशरथः भरतागमनात्पूर्वं रामस्य अभिषेकमिच्छतीति आपाततः प्रतिभाति। तथाच दशरथस्य धर्मनिष्ठायाम् ईदृग्विधा शङ्का समुत्पद्यते यद् दशरथः कैकेयीविवाहकाले उक्तं वचनं कुतःपरिपालयतुं न इयेष? इति।

तत्र केचिद् भागवताः एवं समाधानं ददति यद् दशरथो यदेव राज्यं भरताय दातव्यमासीत् न तद्राज्यं रामाय दातुमुद्युक्तः, प्रत्युत स्वकीयमेव दातुमुद्युक्तः। तत्कथमिति चेत् अश्वमेधानुष्ठानकाले राजा दशरथः स्वीयं राज्यं यागीय-ऋत्विग्भ्यः दत्तवान्।

[16]प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः। अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम्॥

उद्गात्रे तु तथोदीचीं दक्षिणैषा विनिर्मिता। अश्वमेधे महायज्ञे स्वयम्भुविहिता पुरा॥

क्रतुं समाप्य तु तदा न्यायतः पुरुषर्षभः। ऋत्विग्भ्यो हि ददौ राजा धरां तां कुलवर्धनः॥

ऋत्विजः तु स्वाध्यायनिरतानाम् अस्माकम् एतद्राज्यं नापेक्षितम् , अतः तत्प्रतिनिधिरूपेण गोरत्नादिकं देहीति संप्रार्थ्य स्व्यकुर्वन्।

ऋत्विजस्त्वब्रुवन्सर्वे राजानं गतकल्मषम्। भवानेव महीं कृत्स्नाम् एको रक्षितुमर्हति॥

न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने। रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप॥

निष्क्रयं किञ्चिदेवेह प्रयच्छतु भवानिति॥

तथा च भरताय यद्देयं तद् भरतस्य जननात्प्रागेव अन्येभ्यः दत्तम् , इदानीं दीयमानं तु ऋत्विग्भ्यः सकाशात्प्राप्तमेव इति समर्थयन्ति। किन्त्विदं समर्थनं न युज्यते, मीमांसान्यायविरोधात्। पूर्वमीमांसायां षष्ठाध्यायस्य सप्तमे पादे द्वितीये अधिकरणे विश्वजिति सर्वस्वदक्षिणाम्नानाद् राजकर्तृकविश्वजिद्यागे महापृथिवी दातव्या न वा इति सन्दिह्य, न दातव्या इति सिद्धान्तः कृतः। तत्र च कारणं सार्वभौमस्यापि महापृथिव्यां स्वत्वं न भवति, तत्र राज्यमात्राधिकारो भवति इत्युक्तम्। राज्यं नाम [17] स्वविषयपरिपालनकण्टकोद्धरणरूपम् , न तु महापृथिव्यां स्वाम्यम्। निरुक्तकण्टकोद्धरणायैव च कर्षकादिभ्यः करादिस्वीकारः, दुष्टेभ्यः दण्डदानम् इत्यादि। तथाच अश्वमेधे दशरथः ऋत्विग्भ्यः स्वीयं राज्यं दातुं न शक्नोति, किन्तु राज्ये स्वस्वामिकभूमिमेव दातुं शक्नुयात् , इति स्थिते ऋत्विग्भ्यः राज्यं दत्त्वा तेभ्यः स्वीकर्तुमपि न शक्नोति इति स्थितम्।

---

[16]बालकाण्डेसर्गः 14 श्लोकः 43 - 47

[17]भाट्टदीपिकायां अध्यायः - 6 पादः - 7 अधिकरणम् - 2

अतएव अन्ये आचार्याः दशरथस्य कैकेयीपरिणयकालीनं वाग्दानम् अभ्यनुज्ञाविधिविषयत्वेन वर्णयन्ति। अभ्यनुज्ञाविधिर्नाम निषिद्धस्य कर्मणः सन्दर्भविशेषे दोषाजनकत्वज्ञापकः विधिः। अर्थात् "नानृतं वदेत्" इति सामान्यतः निषिद्धस्य अनृतवदनस्य निषिद्धत्वादेव अनिष्टजनकत्वं प्रमितम्। तस्य विवाहविषये दोषाजनकत्वम् अनेन "विवाहार्थम् अनृतं वदेत्" इत्यनेन प्रमीयते। तथाच दशरथेन अधर्मः न आचरितः इति तस्य धर्मनिष्ठतां समर्थयन्ति।

वस्तुतस्तु दशरथस्य विवाहकालीनं यद्वचनं तत्सम्भावितवस्तुस्थितिकथनमेव, न तु वाग्दानम् इत्यपि वक्तुं शक्यते। तथाहि दशरथस्तावत् "प्रजायै गृहमेधिनाम्" इति वचनानुसारं कौसल्यायां पुत्रानुत्पत्तिकारणात् पुत्रेच्छया कैकेयीम् ऊढवान्। तत्काले च सम्भावितं यत्, यदर्थं च विवाहः प्रचलति तदेव (कैकेय्यां पुत्रोत्पत्तिः) स्वश्वशुरस्य निकटे न्यवेदयत्। अतः नैतद् वाग्दानत्वेन गणनार्हम्। अपिच कैकेय्यामपि पुत्रानुत्पत्तौ सुमित्रां परिणीतवान्। तस्यास्सकाशादपि पुत्रालाभात्पुत्रकामेष्टिम् अन्वतिष्ठत्, यत्र कौसल्यायां ज्येष्ठपुत्रः श्रीरामः उत्पन्नः। अतः तस्मै राज्यदाने न कोऽपि दोषः अस्ति। अतएव कैकेयी अपि भरताय राज्यस्वीकरणकाले कदापि एनं वृत्तान्तं पुरतः नानयति, प्रत्युत देवासुरयुद्धमेव।

रामपट्टाभिषेककाले यद् दशरथस्य वचनं "भरतागमनात्पूर्वं राज्यं स्वीकुरु" इति, तद् भरतस्य राज्ये लोभो भवेदिति कारणात् न। प्रत्युत भरतागमनपर्यन्तकालप्रतीक्षायां सत्यां दातुं दशरथ एव न भविष्यतीति कारणादेव। दशरथस्तु ज्यौतिषज्ञः आसन्नं स्वीयं मरणं मनसिकृत्वा एवमब्रवीत्

[18]अवष्टब्धंच मे राम नक्षत्रं दारुणैस्सह। आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः॥

प्रायेण हि निमित्तानामीदृशानां समुद्भवे। राजा मृत्युमवाप्नोति घोरां वाऽऽपदमृच्छति॥

तद्यावदेव मे चेतः न विमुह्यति राघव। तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः॥

केकयदेशात् अयोध्यां प्राप्तुं सप्त दिनानि न्यूनातिन्यूनम् अपेक्ष्यन्ते। इदमेव दशरथस्य अन्तिमक्रियार्थं भरतागमनसन्दर्भे वर्णितं,

[19]तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि। अयोध्यामग्रतो दृष्ट्वा सारथिं वाक्यमब्रवीत्॥ इति।

अतः दशरथेन न भरताय राज्यं प्रतिश्रुतम् इति स्थिते दशरथस्य धर्मनिष्ठायां न कापि न्यूनताऽस्तीति शम्॥

---

[18]अयोध्याकाण्डेसर्गः 4 श्लोकः 18 - 20

[19]अयोध्याकाण्डेसर्गः 71 श्लोकः 18 & 19

# श्रीमद्रामायणे राजनीतिः

Dr. R. Lakshminarasimhan

Asst.Professor, Department of Nyaya,

Sri Ahobila Muth Adarsha Sanskrit Mahavidyalaya,

Madurantakam 603 306

इति ह आस इति इतिहासपदस्य व्युत्पत्तिः वर्तते। संस्कृतिः रामायणमहाभारताभ्यां ज्ञायते इत्यत्र तु नास्ति संशीतिलेशः। तच्च रामायणं धर्मशास्त्रसारभूतं इति तु ज्ञातम् एव। सत्यपरिपालनं, गुरुवचन-पालनं, स्त्रीणां धर्माः, वानराणां प्रभावः, सर्वेषां भक्तिः, शरणागतरक्षणं, राक्षसानां प्रभावः, रामस्य वीरप्रभावः, कुम्भकर्णस्य नीतिः इत्यादयः बहुत्र प्रोक्ताः वर्तन्ते। अनर्घराघवे मुरारिः एवं सारं ब्रवीति –

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।

अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥ इति ।

न्यायमार्गे प्रवर्तमानानां पशुपक्षिणः अपि साहाय्यं कुर्वन्ति। कुमार्गे प्रवर्तमानं स्वसोदरोऽपि त्यजति इति।

एवं भारतदेशे विद्यमानधर्माणां संरक्षणम् इदानीमपि क्रियते इत्यत्र रामायणमहाभारतादि इतिहासद्वयमेव निदानम्। तत्र सामान्यतया "धर्मो रक्षति रक्षितः" इति वाक्यस्य सारभूतः ग्रन्थः श्रीमद्रामायणम् । लोके बहवः नीतयः प्रोक्ताः। शिशुधर्माः, राजनीतिः इत्यादयः। तत्र श्रीमद्रामायणे अयोध्याकाण्डे विद्यमानराजनीतिविषये किञ्चित् प्रतिपादयामि।

येन राज्ञा स्वधर्मपरिपालनं क्रियते सः देशः सुरक्षितं तिष्ठति। रघुवंशराजानः प्रायेण राजनीतिपरिपालने तत्पराः आसन्। अयं च विषयः कालिदासेन रघुवंशे दिलीपविषये एवमुक्तः अस्ति।

प्रजानां विनयाधानात् रक्षणात् भरणादपि।

स पिता पितरस्तासां केवलं जन्महेतवः॥ इति।

अस्मिन् विषये श्रीमद्रामायणे दशरथः सम्यक् राज्यपरिपालनमकरोत् इति वाल्मीकिः कथयति॥ प्रायेण यः राजा शोभनमन्त्रिगणैः मण्डितः सः अवश्यं सम्यक् परिपालयति। अयोध्याराज्ये तु--

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः।

कात्यायनो सुयज्ञश्च गौतमो विजयस्तथा॥

इति अष्टौ अमात्याः राज्यं सम्यक् परिपालितवन्तः इति ज्ञायते।

"दौर्मन्त्र्यात् नृपतिर्विनश्यति" इति नीतिः श्रीमद्रामायणे न प्रवर्तते। एकदा दशरथः रामाय राज्याभिषेकं कर्तुम् ऐच्छत्। परं सः निर्णयं मन्त्रिमण्डलैः आलोच्य अकरोत्। इदानीं लोके सर्वकारः सर्वत्र अमुमेव नियमं परिपालयति इति सर्वैः विदितमेव।

दशरथः रामाय राज्यं दातुं निर्णयमकरोत्। परं कैकेयी कुयुक्त्या स्वपुत्राय राज्याभिषेकः, रामाय चतुर्दशसमाः वनवासः इति वरद्वयमवाप। तेन रामः अयोध्यां परित्यज्य वनाय ससीतालक्ष्मणः ययौ। मध्ये रामस्य स्थितिं दृष्ट्वा पुरवासिनः दुःखमनुभूतवन्तः। तथापि तस्य मनोभावः एकरूपेणैव आसीत्॥ तदेव कालिदासः एवं वर्णयति –

दधतो मङ्गलक्षौमं वसानस्य च वल्कले।

ददृशुर्विस्मिताः तस्य मुखरागं समं जनाः॥ (रघुवंशे.12.8 श्लोकः)

वने गुहेन समागमः। भरद्वाजमहर्षिणा सत्कारश्च कृतः। ततः सेनापतिभिः सह भरतः राममन्विष्य आगतवान्। तदा भरद्वाजाश्रमं प्राप्तवान्। तं महर्षिः अपृच्छत् किं भवान् रामं हिंसितुं आगतो वा इति। ततः विश्वकर्माणमाहूय आतिथ्यं चक्रुः।

ततः भरतः रामं द्रष्टुमागतः। लक्ष्मणः कोपं प्रकटयति। तदा रामः भरतस्य गुणप्रशंसाम् अकरोत्।

यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत्।

नाहं तत् प्रतिगृह्णीयां भक्षान् विषकृतानिव॥ (श्री.रा.अयो.का. 97.4 सर्गः)

येन द्रव्येण बान्धवाः मित्राणि च हतानि तेन द्रव्येण मम किं प्रयोजनम् इति रामः पृच्छति लक्ष्मणम्। धर्मार्थकामरूपपुरुषार्थाः भवतां कृते एव मया अन्विष्यन्ते। एतत् सत्यमिति रामःकथयति। यदि भरतविषये भवान् असमीचीनां वाचं वदति, तर्हि मां वदतीति चिन्तयामि इति रामः कथयति।

ततः रामः भरतं साक्षात् पश्यति। भरतः रामस्य पादौ प्रणम्य तिष्ठति। रामः तं आलिङ्गति। तत् कथमासीत् इति वाल्मीकिः एवं वर्णयति सूर्यचन्द्रौ यथा शुक्रबृहस्पतिभ्यां संयुक्तौ दृश्येते तद्वत् तयोः समागमः आसीदिति वर्णयति।

ततः सुमन्त्रेण गुहेन चैव समीयतू राजसुतावरण्ये।

दिवाकरश्चैव निशाकरश्च यथाम्बरे शुक्रबृहस्पतिभ्याम्॥ (श्री.रा.अयो.99. 41श्लो.)

रामः भरतं बहुधा पृच्छति- राजा कथमस्ति ? स्वर्गं गतो वा ? किं दुर्बलः त्वम् ? अन्य राजानः राज्यं स्वीकृत्य बहिर्गतवन्तः? अथवा प्रजानां विश्वासाभावात् नगरात् निष्कासितो वा ? अथवा पितरि शुश्रूषायाम् अश्रद्धा जाता इति कारणात् तं परित्यज्य आगतो वा ? इति अपृच्छत् तदानीं रामः भरतमुखेन

सर्वेषां राजनीतिं बोधयति।

1. श्रेष्ठकुलोत्पन्नः सत्यसन्धः अनवधिकयज्ञानुष्ठानपरः धर्ममार्गप्रवर्तयिता दशरथः कथमस्ति। बहुविधदुःखानुभूता कौसल्या कथमस्ति? इति च पृच्छति।
2. ब्रह्मज्ञानी सकलविद्यानिपुणः धर्मानुष्ठानतत्परः इक्ष्वाकुकुलगुरुः वसिष्ठः सम्यक् पूजितो वा ?
3. एवम् अग्निहोत्रादियज्ञविधीनां ज्ञाता इहामुत्रधर्मानुष्ठानम् एकरूपेण कुर्वाणः पुरोहितः कथमस्ति?
4. देवाः यागादिभिः, मातापितरौ गुरवः च शुश्रूषया पूज्याः। वयसा ज्ञानेनानुष्ठानेन श्रेष्ठानां नमस्कारः, विदुषां ब्राह्मणानां च सत्कारकरणं सर्वं करोति वा ?
5. धनुर्वेदे राजनीतौ च निपुणः सुधन्वा त्वया नित्यं पूज्यते वा ?
6. एकस्मिन् राज्ये बुद्धिमान् नीतिमान् श्रेष्ठकुलसम्पन्नः सूक्ष्मदर्शी च मन्त्री भवेत्।

एवं रामः भरतमुखेन राजनीतिं बोधयति –

मन्त्रो विजयमूलं हि राज्ञां भवति राघव।
सुसंवृतो मन्त्रधरैरमात्यैः शास्त्रकोविदैः॥ (श्री.रामा.अयो.का. 100 सर्गे. 16 श्लोकः)

नीतिशास्त्रनिपुणानां मन्त्रालोचनेन राज्ञः जयः अवश्यं भवतीति ।

एवं राजा समये निद्रां, प्रातः उत्थानं च कुर्यात् । उषःकाले ऐश्वर्यं सम्पादयितुं चिन्तयेत्। क्रियमाणमन्त्रालोचना कार्यपरिसमाप्तेः पूर्वं जनैः ज्ञायते चेत् तत् न उत्तमम् भवति। गुणदोषौ पक्षपातं विना द्रष्टव्यौ। राजानः चारचक्षुषो भवन्ति इति भारविः कथयति। सुलभसाधनैः विशेषफलप्राप्तये कार्याणि करणीयानि। शीघ्रं यदि कार्यं न क्रियते तर्हि कालः तत्र तत् कार्यं स्वीकरोति। "स कालः तत्र वै प्रभुः" इति वचनात्।

अस्माभिः क्रियमाणः राज्यगूढधर्मः परैः न ज्ञातव्यः। मन्त्रिभिः त्वया च चिन्तितं कार्यं पश्चात् ऊहनीयं भवति। विद्वांसः राज्ञः संरक्षणाय सम्यक् कार्याणि कुर्वन्ति। अन्यैः आरब्धकार्याणां ज्ञाने कुशलः, स्थिरबुद्धियुक्तः , नीतिशास्त्रनिपुणः, कार्याकार्यविवेकी भवति चेत् सः राजा विजयं प्राप्नोति।

सेवकाः, आसनवाहनादिकार्यकरणे तत्पराः यदि न भवन्ति तर्हि मनसि सन्तापः जायते। उत्तमवस्त्राणि आभरणानि वाहनानि च मन्त्रिणां कृते संप्रेष्य प्रीत्या ते स्वीकुर्वन्ति वा इति राजानः पश्यन्ति। मनोवाक्कायैः शुद्धाः मन्त्रिणः बृहत्कार्येषु उपयोज्याः भवन्ति। सामदानभेददण्डाद्युपायानुष्ठाने निपुणः, वञ्चननीतिनिपुणः,अन्तरङ्गसेवकानामुपरि दोषैकदृक्, हिंसायां भयरहितः, विजयशीलः , सकाले सैन्योपयोक्ता, आपत्काले दृढमनस्कः यजमानविश्वासी बहिरन्तश्च परिशुद्धस्वभावयुक्तः उत्तमकुलोत्पन्नः

सेनापतिः भवेत्। कालक्रमेण येन सर्वमपि राज्यं प्राप्यते सः त्याज्यः हन्तव्यः वर्तते।

महाबलशालिनः, उत्तमगुणपूर्णाः अत्यन्तसमर्थाः पूर्ववृत्तं ज्ञात्वा विशेषसन्मानं कृत्वा पूजनीयाः। सेवकानां कृते राज्ञा सकाले वेतनादिकं दातव्यम् ।यदि समये न दीयेत तदा विश्वासानर्हाः भवन्ति। तेन राज्यस्य महान् अनर्थः जायते।

क्षत्रियकुलोत्पन्नः प्रीतिविश्वासयुक्तः राजा भवेत्। दूतः स्वदेशीयः अनन्यमनस्कः, कार्यकुशलः समयोचितबुद्धिमान् च स्यात् । झटिति प्रतिवचनदाता स्वराज्यात् निष्कासितः दुर्बलः इति न चिन्तनीयः। नास्तिकैः सह सम्भाषणं न कार्यम्। पण्डितम्मन्याः वेदमार्गविरोधिनः धर्मशास्त्र विरुद्धकरणे तत्पराः इहपरलोकविषये अविश्वासवन्तः न श्लाघनीयाः। कृषकः, गोरक्षकः च राज्ये अनन्तफलभाक् भवेत्। तेन राज्ञः प्रीतिः भवेत्। सर्वत्र यस्य समृद्ध्या रम्यं दृश्यते तदेव राज्यं श्लाघनीयं दृश्यते।

प्रतिदिनं राज्ञा प्रजाः द्रष्टव्याः। यदि तथा न क्रियते तर्हि सन्देहं प्राप्नुवन्ति। सेवकानां कृते राजा सर्वसुलभः न भवेत्। गर्वं प्राप्य मर्यादां न दास्यन्ति। शिल्पिनः च वन्द्याः।

राज्ये आयः अधिकः, व्ययश्च न्यूनः कर्तव्यः। राजा ब्राह्मणानां देवतानां याचकानां वीराणां च व्ययं कुर्यात्। राज्ये शुद्धस्वभावयुक्तः मनोवाक्कायैः श्रेष्ठः साधुः भवेत्॥ देवताः, गुरवः तपस्विनः, अतिथिदेवो भव इत्युक्तरीत्या अतिथयः ब्राह्मणाश्च पूज्याः भवन्ति।

प्रथमम् धर्मः अर्जनीयः। द्वितीये अर्थसम्पादनं, सायं कामः इत्येतत् त्रितयं व्यतिरेकेण क्रियते चेत् राजा नष्टं प्राप्नोति। अजागृत्या कार्यकरणे तत्परः, मन्त्रिणां साहाय्येन कार्यकर्ता राजा न भवेत् । मङ्गलकार्याणि राजा कुर्यात् । द्यूतं, स्त्रीभिः कालयापनं, गाने क्रीडायां च कालयापनं यः राजा करोति तत् राज्यं अवश्यं विनाशं एष्यति।

एवम् अन्ते पञ्च दुर्गाः, सामादिचतुर्विधोपायाः, राज्यस्य सप्ताङ्गानि, कृषिः, व्यापारः, दुर्गः सेतवः, गजरक्षणं, करस्वीकारः, ऊषरप्रदेशे कृषिकार्यम् इत्यष्टौ, धर्मार्थकामेषु यथाकालं यापनं, त्रयी, वार्ता, दण्डनीतिः इति विद्यात्रयसम्पादनं, सन्धिविग्रहयानासनद्वैधीभावसमाश्रयणरूपषड्पायाः, दैवकोपात् पञ्चकष्टप्राप्तिः, मनुष्येण प्राप्यमाणपञ्चकष्टानामनुभवः इत्यादि विषयाः वर्णिताः सन्ति।

राज्ञः पञ्च प्रधानानि अङ्गानि भवन्ति । तानि च मन्त्री, राज्यं, दुर्गः,कोशः , दण्डनीतिः इति। एते यदि न सन्ति तत् राज्यमेव न भवति। एवं राजा द्वादशराजमण्डलमण्डितः सैन्यरक्षणे तत्परः भवेत्। शास्त्रोक्तलक्षणैः मन्त्रिभिः आलोचना कार्या। सम्पादितं धनं स्वपरहितं भवेत्। भार्या अनुकूला भवेत्। शास्त्रज्ञः आचारशीलः भवेत्। "एकः स्वादु न भुञ्जीत" इत्युक्तरीत्या मधुरवस्तूनि एकाकी न भुञ्जीत। एतादृशराजनीतयः यदि राज्ञा परिपाल्यन्ते, तेन स्वर्गः प्राप्तुं शक्यते इति ॥

*****

# वाल्मीकीये राजनीतिः

Dr.V.Srinivasa Sarma

Director I/c, Sanskrit Academy,(Shodha Sansthan)

Osmania University

Hyderabad – 500 007

09700746035

sanskritacademyhyd@gmail.com

संस्कृतसाहित्ये आदिकाव्यमिति प्रसिद्धं भारतीयजीवनस्य प्राणभूतं रामायणमिति सर्वेऽपि जानन्त्येव । आदिकविना वाल्मीकिना काव्येऽस्मिन् समग्रं मानवजीवनमेव सम्यक् चित्रितमस्ति । धर्मः, राजानीतिः लोकाचारः इत्यादयो बहवो विषया बहुधाऽत्र निरूपिताः । रामायणकालमधिकृत्य यतो विद्वांसः भिन्नानभिप्रायान् प्राकटयन् अतः पुनस्तमंशमधिकृत्य न किञ्चिदुच्यतेऽत्र ।

राजोत्पत्तिवर्णनं रामायणे न कुत्राऽप्युपलभ्यते परन्तु रामराज्यस्यैव वर्णनमस्ति । रामराज्यस्य वर्णनमेवास्माकं राजनीति विषये किमपि समूहितुमादर्शप्राय इति वक्तुं शक्यते । राज्यस्याधारः वर्णाश्रमधर्म एवासीत् । रामराज्ये सर्वेऽपि स्वस्ववर्णानुगतधर्मादिक मनुसरन्तः सुखिनश्शान्ताश्चासन् । अराजके राज्येऽपि प्रजानां धर्मपालनं कथमासीत् इत्यपि रामायणस्थादिकस्मात् घटनात् ज्ञातुं शक्यते । यदा रामः सीतया सह लक्ष्मणानुगतः वनमागमत् तदा दशरथे स्वर्गते प्रजाभिः राजविहीनधर्मपालनं कृतम् ।

रामराज्ये सर्वे प्रजाः सन्तुष्टान्तरङ्गाः आसन् । वृष्टिश्च समृद्धा । पृथिवी सस्यादिभिस्सम्पूर्णा । सर्वे पौराः नीरोगाः सन्तुष्टाश्च आसन् । कन्यापि अकालमृत्युर्नासीत् । चौर्याद्यभावे सर्वेऽपि स्वस्वधर्मेषु श्रद्धां वहन्तः स्ववर्णधर्मानुसारं कर्माणि कुर्वन्त स्सुखमनुभवन्ति स्म । रामायणकाले प्रजाः समैक्यभावेन चरन्ति स्म । कुत्राऽपि विषमता नासीत् । राजा न केवलं शासकोऽपि तु प्रजानां माता पिता चासीत् ।

राजा सत्यञ्च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥

प्रजा अपि राजानं पितृरूपेण भावयन्तः यथावसरं राज्ञे स्वमनोगतमपि निवेदयन्ति स्म ।

लोकानुरञ्जकत्वमेव मुख्यमिति मन्वानः श्रीरामः रजकस्य वचश्श्रुत्वा स्वधर्मपत्नी सीतामपि वनं प्रेषितवान् । अमुमेवाभिप्रायं भवभूतिरपि स्वोत्तररामचरितनामनाटके रामपात्रमाश्रित्य सूचितवान् ।

स्नेहं दयां च सौख्यञ्च यदि वा जानकीमपि ।

आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ इति ।

रामायणकाले रौद्धान्तिकराज्यतन्त्रं यद्यप्यविद्यत तथापि प्रजातन्त्रमेव मुख्यममन्यत इति वक्तुं शक्यते । राजा लोककल्याणाय शशास । लोककल्याणमेव राज्ञो मुख्योद्देशः ।

रामायणे समुपलभ्यमानैराधारै रामराज्ये राज्ञो निर्वाचनं लोकाभिप्रायानुसारीति ज्ञायते। रामपट्टाभिषेकात् प्रागेव दशरथः सभामेकामायोज्य रामस्य राज्याभिषेकमधिकृत्य सभासदामभि प्रायान् स्वेच्छां प्राकटयत् । सभासद्भिरनुकूलमेव यदा प्राकटयत तदैव तन्निश्चयेन समगृह्णात् ।

## रामायणकाले राज्ञः स्थानम्

रामायणे राज्ञः महत्त्वपूर्णं स्थानं वयं पश्यामः । प्रजास्तमीश्वरस्वरूपं मन्यन्ते स्म । धर्मस्थापनार्थ, धर्म्मविनाशार्थञ्च भुवि राजरूपेण ईश्वर अवातरदिति तेषां भावनासीत् । दशरथे दिवङ्गते अयोध्याराज्यं प्रति चिन्तयतां ब्राह्मणानां मनस्सु भावनेदृशी आसीत् यत् –

इक्ष्वाकूणाम् इहाद्यैव राजा कश्चित् विधीयताम् ।

अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥ इति । (2-51-6)

यतो हि

नाराजके जनपदे योगक्षेमः प्रवर्तते । न चाप्यराजके सेना शत्रून् विषहते युधि ॥ 2-51-22

नाराजके जनपदे स्वकं भवति कस्यचित् ।

मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ 2-51-25

अत एव इक्ष्वाकुवंशीय एव कश्चन पुरुषस्सिहासनाधिरूढः कर्तव्यः । स पुरुषः सत्यवाक्परिपालकः, कुलीनः धर्मज्ञः कुलाचार प्रवर्तकश्च भवेत् । राज्ञ अभावे राज्ये समुत्पत्स्यमानां अराजकतां विचिन्त्य वसिष्ठादयः दशरथमरणानन्तरं राज्यपालने भरतं नियोजितवन्तः। किष्किन्धाकाण्डेऽपि एतादृशामेव संघटनां वयं पश्यामः । राक्षसवधानन्तरं यदा वानरराजा वाली नगरं प्रति न प्रतिनिवृत्तः तदा तन्मरणं निश्चितवद्भिः मन्त्रिगणैस्सुग्रीवः सिंहासनेऽभिषिक्तः अनेन रामायणकाले राज्ञः स्थानं महत्त्वपूर्णं उत्तरदायि चासीदिति ज्ञायते।

## राज्ञो गुणाः

राजा वेदवेदाङ्गधर्मादिशास्त्रपारङ्गतो भवेत् । धर्मं च समाचरेत् । राजा इन्द्रसमः तेजसि सूर्यः धने कूबेर इति राजानं रामायणं प्रस्तौति । राजा प्रजाः स्वप्राणसमं परिपालयेत् । दशरथ एकदा समाहूय रामं एवमुपदिष्टवान् पुत्र त्वं राजनीतिज्ञो भव । विनयसम्पन्नः जितेन्द्रियश्च भूत्वा व्यसनानि दूरे त्यज । राजसभायां सत्यासत्ये ज्ञातुं क्षमां वहेः । प्रजानां न्याय्यं कुरु । राजकोशस्य वृद्धयै प्रयतस्व । एतादृश एव गुणा राज्ञि अवश्यं भवेयुरिति दशरथ उपादिशत् ।

राज्ञः कर्तव्यम् – रामायणे राज्ञः कर्तव्यं द्विविवं वर्णितं दृश्यते । धर्मपालनं प्रजानुरञ्जनञ्च धर्मपालनं च पुनर्द्विविधं –धर्म शास्त्रानुसारपालनं, राजधर्मपालनञ्च । धर्मशास्त्रानुसारं राजा स्त्रीवधं ब्राह्मणवधं च नकुर्यात् । परन्तु रामायणे रामः प्रजा रक्षणं धर्मरक्षणार्थं मनसि निधाय ब्राह्मणवधं स्त्रीवधं च कृतवान् । यज्ञरक्षणार्थं वने गच्छन् रामः ताटकीममारयत् । धर्मरक्षणाय प्रजारक्षणाय च रावणमहनत् । अनेन प्रजापालन धर्मरक्षणमेव राज्ञो मुख्यकर्तव्यमिति ज्ञायते ।

रामायणे शासनसम्बद्धविचारः – रामायणकाले प्रशासनव्यवस्था विस्तृता नासीत् । धर्मपरायणानां दशरथ जनक जनक रामादीनां राज्येषु प्रजाः सर्वविसुखानि अन्वभूवन् । एवं रावणराज्येऽपि प्रशासनविषये राजा पुरोहितमन्त्रिसभासदैश्च मन्त्रणं करोति स्म। प्रथमं धर्मशास्त्रं अनुसृत्य, द्वितीयं मन्त्रिमण्डलाभिप्रायमनुसृत्य पालनमभवत् । अधर्मपालकस्य राज्ञोऽपि दण्ड आसीत् । राजा सगरः अधर्मपालकं तस्य ज्येष्ठपुत्रं असमञ्जसं नगरवहिष्कारेण शिक्षितवान् ।

## राज्यस्वरूपम्

सप्ताङ्गं राज्यमुच्यते इति सर्वषां विदितप्रायमेव । रामायणेऽपि सप्तङ्गस्य प्रामुख्यं दरीदृश्यते । रामायणे गुहः रामाय स्वोपदेशं ददत् सेनादुर्गजनपदादिविषयेषु सावधानतया भवितुं वदति । किष्किन्धाकाण्डे हनुमान् सुग्रीवाय स्वोपदेशं दददेवं वदति । सेना, मित्रं आत्मा च यत्र यस्य समाः भवन्ति तत्र महत् राज्यं स्यादिति । काव्येऽस्मिन् विविधानां राज्यानां वर्णनं समुपलभ्यते । कोसला, अयोध्या च महती राज्ये । दशरथस्याधीने बहूनि राज्यानि आसन् । स्वीकृतकरेणैव राज्यनिर्वहणं भवति स्म । राजानः अश्वमेधादियज्ञनिर्वहणेन धर्मं स्वयं चरन्तः अन्यानपि धर्मपथे आनयन्ति स्म । दशरथेन पुत्रेष्टिनामेके यज्ञे निरूह्यमाणे सर्वेऽपि राजानः समेत्य तमभिनन्दितवन्तः । रावणः युद्धाय आगच्छतीति

हनुमतः भरतः श्रुत्वा स्वाधीने वर्तमानानां राज्ञा सेनां युद्धाय प्रेषितवान् । परन्तु रामः तां सेनां प्रत्यावर्तितवान् ।

रामायणे परिषत् समितिः इत्यादयः प्रयोगा दृश्यन्ते । समितिमथवा परिषदं ज्ञानिन एव पालयन्ति स्म । एत एव अत्यवसरपरिस्थितौ सभामायोजयन्ति स्म । युवराजनिर्वाचनविषये युद्धविषये उत्तराधिकारिचयनविषये च मन्त्रिमण्डलेन सभा आयोज्यमानाऽसीत् ।

न्यायव्यवस्था – धर्मानुकूलं परिष्कारः कर्तव्यः । राजा प्रजानां पशुन्यानि सावधानतया श्रुत्वा निष्पक्षपात न्यायनिर्णयं कुर्वन्नासीत् । यः राजा न्यायनिर्णेता न भवति सः पापमनुभवन्नन्ते । नरकं च व्रजति । रामः न्यायेन प्रजासम्मतः प्रजानुरञ्जकश्च राजासीत् । अत एव धर्मपत्नी सीतामपि न्यायपरिपालनाय वनं प्रेषितवान् ।

रामाणे सन्धिविग्रहादिषाड्गुण्यप्रयोगोऽपि दृश्यते । सामाद्युपाया अपि वाल्मीकिना निरूपिताः । रावणेन सह योद्धुं रामः सुग्रीवेण सह मैत्रीमकरोत् खलु ।

रामायणे दूतविषये विशेषा दृश्यन्ते । दूतोऽवध्यः । रामसन्देशश्रावयिता हनूमान् यदा लंकायां सीता कुत्र वर्तत इति आत्वा लंकां ददाह, वनमपि नाशनमकरोत् तदा हनूमन्तं सभायां प्रवेश्य रावणस्तेन सह संभाषणमेवाकरोत् न तु सहसा तमहनत् । रामायणकाले सन्देशप्रेषणाय वार्ताऽहरणाय च दूता उपयुवता आसन् । वाल्मीकिना सेना पञ्चविधा प्रोक्ता मित्रबलं मूलवलं, भृत्यवर्गः, अटवीवलं द्विषद्बलञ्चेति।

रामायणे दुर्गत्रय (चतुष्टय) वर्णनं दृश्यते । नदीदुर्गं, गिरिदुर्गं वन्दुर्गंचेति । नदीदुर्गस्य रावणराजधानी लङ्केवीदाहरणम् । गिरिदुर्गस्य किष्किन्धानगरदुर्गमेवोदाहरणम् । वन्दुर्गस्य लङ्कास्थितदुर्गमेकमुदाहरणरूपेण दत्तम् ।

रामायणे युद्धपद्धतिवर्णनमपि समुपलभ्यते । युद्धात्पूर्वमेव दुन्दुभिनादं कृत्वा सर्वेऽपि सन्नद्धा भवन्ति स्म । मायायुद्धवर्णनमपि दृश्यते रामायणे । रावणमेघनाथमारीचादयः मायायुद्धप्रवीणाः । योद्धारोऽपि स्वसमानन्विष्य तैस्सहैव युध्यन्ते स्म ।

रामायणकालशासनपद्धत्या इदं ज्ञायते यत् राजा लोक कल्याणाय, धर्मरक्षणाय, प्रजानुरञ्जनायैव स्वार्थं विहाय राज्यमपालयदिति । यतः रामराज्यमनुत्तमगुणसम्पूर्णं आसीत् अत एव गान्धी महाभागा अपि सदा रामराज्यमेव ऐच्छन् ।

# श्रीमद्वाल्मीकिरामायणे रामस्य पितृभक्तिः, स्त्रीधर्मश्च

Dr. सु. श्रीधर स्वामिनाथः

विभागाध्यक्षः संस्कृत विभागः

विवेकानन्दमहाविद्यालयः

पत्रिकापरमेश्वरपुरी (तिरुवेडगम्)

दक्षिण मथुरा (मदुरै), तमिलनाडु-625234

संस्कृतवाङ्मये वेदानां स्थानं सर्वोपरि वर्तते। अस्मिन् भूमण्डले समुपलब्धेषु विविधभाषागतप्राचीनग्रन्थेषु वेदः प्राचीनतम इति सर्वैरेव अङ्गीक्रियते। वेदस्तु धर्मनिरूपणे स्वतन्त्रं प्रमाणम्। यद्यपि वेदस्य प्रामाण्यं स्पष्टं भवति, तथापि तत्र प्रतिपादितधर्मविषयाणाम् अनुयायिनां ज्ञानम् इतिहासपुराणाभ्याम् एव प्राप्तुं शक्यते। अत एव "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति उक्तम्।

वेदे "सत्यं वद, धर्मं चर, मातृदेवो भव, पितृदेवो भव" इत्यादिवाक्यानि सन्ति, परन्तु तदनुसृत्य यः कोऽपि मनुष्यः भूमौ जीवितवान् वा इति प्रश्नः सर्वेषां मनसि वर्तते। तन्निरूपणार्थं वेदविहितधर्मप्रतिपादनार्थं च इतिहासपुराणानाम् उत्पत्तिः बभूव। संस्कृत-इतिहासे सर्वप्रथमं स्थानं रामायणस्य एव इति प्रसिद्धमेव। रामायणम् आदिकाव्यम् इत्यपरनाम्नाऽपि प्रसिद्धम्। तस्य कर्ता आदिकविः वाल्मीकिः, साक्षात् परमात्मा महाविष्णुरेव रामावतारद्वारा मानुषशरीरं गृहीत्वा दुष्टनिग्रहशिष्टपरिपालनं, पितृवाक्यपरिपालनम्, गुरुसेवा इत्यादिवेदविहितधर्माणामाचरणं कृतवान् इति सूचितवान्। उक्तं च -

"विष्णुं मन्यामहे रामं मानुषं देहमास्थितम्"। [युद्धकाण्डः (३५) ३६] इति।

यद्यपि श्रीमद्वाल्मीकिरामायणे श्रीरामस्य बहवः गुणाः वर्णिताः सन्ति। तेषां मध्ये रामस्य पितृभक्तिः इति विषयः, मुख्यतमः। एवं स्त्रीधर्मः च रामायणे मुख्यतया प्रतिपादितः। तयोः ज्ञानम् अद्यतनकाले अत्यावश्यम् इति मत्वा अस्मिन् शोधपत्रे यथाशक्ति यथामति "पितृभक्तिस्त्रीधर्मयोः" निरूपणं कर्तुं प्रयत्नं करोमि।

तत्र "पितृभक्तिः" इति शीर्षके "मातृ-पितृ-गुरुभक्तिः" इत्यादयोंऽशाः वर्णिताः।

लोकस्य सृष्टिं कृत्वा तत्परिपालकत्वेन स्वयम् ईश्वरः अस्ति इति व्यवस्था श्रुतिप्रमाणेन, स्मृतिप्रमाणेन, गुरूपदेशेन, युक्त्या च ज्ञातुं शक्यते। तादृशस्य ईश्वरस्य साक्षात्कारः लोके अपूर्व एव । परन्तु अस्माकं सृष्टिम् पोषणं, परिपालं च कुर्वन्तौ, अस्माकं उन्नतिविषये अनिशं चिन्तायुक्तौ च यावस्माकं मातापितरौ स्तः , तावेव अस्माकं प्रत्यक्षदेवौ । तादृशमातृपित्रोः सेवा, भक्तिः, शुश्रूषा च अस्माभिः अवश्यं कर्तव्याः भवन्ति । अस्मिन् विषये रामायणस्य अयोध्याकाण्डस्य अष्टादशसर्गे षोडशश्लोके वर्णितं यत्

"यतो मूलं नरः पश्येत् प्रादुर्भावमिहात्मनः।
कथं तस्मिन् न वर्तेत प्रत्यक्षे सति दैवते॥" (अयोध्याकाण्डः (१८) १६) इति ।

तनयस्य जननानन्तरं नित्यं पितृभ्यां स्वशिशोः स्नान-आच्छादन-प्रियभाषण-तोषण-संवर्धनादिकं यत् क्रियते तस्य प्रतिकरं कर्तुं नरः न समर्थः। उक्तञ्च--

यन्मातापितरौ वृत्तं तनये कुरुतः सदा।
न सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम्॥
यथाशक्ति प्रदानेन स्नापनाच्छादनेन च।
नित्यं च प्रियवादेन तथा संवर्धनेन च॥ (अयोध्याकाण्डः (१११) ९, १०)

पित्रा जनितः मात्रा पोषितश्च पुरुषः आचार्यात् ज्ञानं प्राप्नोति । अतः एते त्रयः अपि पूजनीयाः एव।

पुरुषस्येह जातस्य भवन्ति गुरवस्त्रयः।
आचार्यश्चैव काकुत्स्थ पिता माता च राघव॥
पिता ह्येनं जनयति पुरुषं पुरुषर्षभ।
प्रज्ञां ददाति चाचार्यः तस्मात् स गुरुरुच्यते॥ (अयोध्याकाण्डः१११-२, ३) इति।

अतः प्रत्यक्षदेवता इति प्रशंसितानां मातृ-पितृ-गुरूणां सेवा एव लोके श्रेष्ठतमा भवति । तद्विहाय अस्वाधीनदेवताराधने लाभः न भवति इति अभिप्रायः प्रकटीक्रियते अग्रिमश्लोकेन। यथा -

स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम्।
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते॥ (अयोध्याकाण्डः (३०) ३३) इति ।ये कृतोपकारेषु मातृ-पितृ-गुरुषु कृतघ्नाः भवन्ति तेषां निष्कृतिः लोके कुत्राऽपि न दृश्यते। गोघ्ने, ब्रह्मघ्ने, भग्नव्रते च सद्भिः निष्कृतिः उक्ता परन्तु कृतघ्ने निष्कृतिः नास्ति इति विषयः रामायणे प्रदर्शितः। यथा -

**ब्रह्मघ्ने च सुरापे च गोघ्ने भग्नव्रते तथा।**

**निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥** ( किष्किन्धाकाण्डः (३४) १२) इति ।

अतः पितुः सेवा, तदुक्तप्रकारेण जीवनं चैव अस्मिन् लोके उत्तमः धर्मः भवति । सत्यभाषणं, दानं , यज्ञादिसत्कार्येषु प्रवर्तनं च श्रेष्ठमेव , परन्तु पितृसेवा एव श्रेष्ठतमा भवति। तदुक्तम् -

**न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम्। यथा पितरि शुश्रूषा तस्य वा वचनक्रिया॥**

**न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः। तथा बलकराः सीते यथा सेवा पितुर्मता॥**

(अयोध्याकाण्डः (३०) ३५) इति ।

पुरुषः पितृसेवया तस्य आशिषं प्राप्तुं समर्थः एव । ऐहिकसुखप्राप्तिरपि पितृसेवया संभवति। परन्तु आमुष्मिकसुखप्राप्तिः पितृसेवया कथं मनुष्यः प्राप्नोति इति विषयः अस्माभिः चिन्तनीयः। आमुष्मिक सुखप्राप्तिविषये पिता एव सुखादाता इति न चिन्तनीयं परन्तु तस्य सेवया उद्भूतं पुण्यमेव सुखसाधनं भवति। पितृसेवायाः पुण्यफलप्राप्तिः ईश्वरानुग्रहेण नरः लभते । पुरुषः स्वकृतसेवायाः तारतम्यमाधारीकृत्य अस्मिन् लोके धनसमृद्धिः, धान्यसमृद्धिः, विद्याप्राप्तिः, प्रजावृद्धिः इत्यादि-ऐहिक सुखं प्राप्नोति । ततः आमुष्मिकसुखत्वेन निर्दिष्टं स्वर्गलोकं, गन्धर्वलोकं, गोलोकं, ब्रह्मलोकमपि प्राप्नोति। तथा च - **स्वर्गे धनं वा धान्यं वा विद्याः पुत्राः सुखानि च। गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम्॥**

**देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा नराः। प्राप्नुवन्ति महात्मानो मातृपितृपरायणाः॥**

(अयोध्याकाण्डः (३०) ३६, ३७) इति ।

पितुः वचनानुसारं जीवन् पुरुषः दुर्गतिं न प्राप्नोति इति विषयः अपि रामायणे प्रदर्शितः। यथा -

**"पितुर्हि वचनं कुर्वन् न कश्चिन्नाम हीयते"** । (अयोध्याकाण्डः (२१) ७३)

ततः स्वस्य जनकस्य नरकात् त्राणनम् एव प्रधानकर्तव्यं भवति। "पुत्" इति नामाङ्कितनरकात् यः स्वपितरं पाति स एव पुत्त्रः । नरकात् त्राणनं च श्राद्ध-तर्पण-पिण्डदानद्वारा भवति। तत्रापि गयाश्राद्धमपि अवश्यं कर्तव्यम् इति रामायणे स्पष्टम् उक्तम् -

**पुन्नाम नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः पितॄन् यः पाति सर्वतः॥**

(अयोध्याकाण्डः (१०७) १२)

**एष्टव्या बहवः पुत्राः गुणवन्तो बहुश्रुताः। तेषां वै समवेतानां अपि कश्चिद्गयां व्रजेत्॥**

(अयोध्याकाण्डः (१०७) १३)

मातृपितृगुरवः त्रयः अपि पूजनीयाः इति निश्चितम्। परन्तु मातृपितृवाक्ययोर्मध्ये तथैव पितृगुर्वोः वाक्ययोर्मध्ये च अभिप्रायभेदः भविष्यति चेत् कस्य वाक्यम् अनुसर्तव्यम् इत्यादिप्रश्नस्य उत्तरं रामचरिते एव दृष्टम्।

श्रीरामः कैकेय्याः प्रेरणया एव वनं गतवान् इति स्पष्टमेव। तत्पूर्वं दशरथभवने सम्भूतवृत्तान्तः श्रीरामस्य उन्नतिं, तथैव पितृवाक्याचरणस्य मुख्यत्वं च प्रकाशयति। श्रीरामः वनवासार्थं सज्जीभूतः इति ज्ञात्वा, 'रामं न वनं गन्तव्यम्' इति आज्ञापयति माता कौसल्या । स्वादेशं दृढीकर्तुम् देवी कौसल्या अभणत् "यथा राजा दशरथः त्वया पूजनीयः तथैव अहमपि पूजनीया एव" ततः त्वं वनं न गच्छेः इति।

**यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम्। त्वां नाहमनुजानामि न गन्तव्यमितो वनम्॥**

(अयोध्याकाण्डः (२१) २५) इति ।

तच्छ्रुत्वा श्रीरामः दृढचित्तेन, विनयेन च स्वमातरम् उक्तवान् यत् "वयं सर्वे राज्ञो दशरथस्य अनुयायिनः। अतः तस्य आदेशपालनमेव अस्माकम् परमो धर्मः । अतः तदादेशोल्लङ्घनं न कर्तव्यम् इति। यथा -

**त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया। पितुर्नियोगे स्थातव्यं एष धर्मः सनातनः॥**

(अयोध्याकाण्डः (२१) ४९) इति।

अन्यस्मिन् सन्दर्भे महर्षिः वसिष्ठः श्री रामम् उक्तवान् यत् "इक्ष्वाकुवंशे सर्वेषां पूर्वजः एव राजा भवितुम् अर्हति"। अतः त्वं स्वकं राज्यं गृहीत्वा राज्यं जनं च रक्ष । वनं मा गच्छ। अहं तव चैवं तव पितुः च आचार्यः अस्मि। अतः मम वचनानुसारं राज्यं स्वीकरिष्यसि चेत् कोऽपि अपराधः न भविष्यति इति।

**तद्गृहाण स्वकं राज्यम् अवेक्षस्व जनं नृप। इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः॥**

(अयोध्याकाण्डः (११०) ३५)

**सोऽहं पितुराचार्यः तव चैव परन्तप। मम त्वं वचनं कुर्वन् नातिवर्तेः सतां गतिम्॥**

(अयोध्याकाण्डः (१११) १४) इति।

तदा रामःवसिष्ठं प्रत्यभाषत यत् , मम पितुः आदेशम् असत्यं कर्तुं नेच्छामि इति। **"आज्ञातं यन्मया तस्य न तन्मिथ्या भविष्यति"** इति। (अयोध्याकाण्डः (१११) ११)अतः सुखं वा भवेद्दुःखं वा भवेत् , पुरुषस्य ऐहिकामुष्मिकसुखप्राप्तये पितृवाक्यपालनं, पित्रादेशानुसारि जीवनं चैव अत्युत्तमः मार्गः इति सन्देशः श्रीमद्वाल्मीकिरामायणे श्रीरामचरितद्वारा सम्यक् सूचितम्।

## स्त्रीधर्मः

रामायणस्थाः सर्वाः स्त्रियः धर्मरता एव। भरतस्य माता कैकेयी अपि दोषरहिता इति भासकृते प्रतिमानाटके स्पष्टं निरूपितम् । विवाहात्पूर्वं, विवाहात्परं इति द्वौ मार्गौ स्त्रीधर्मे स्तः। विवाहात्पूर्वं पितृभक्तिः, पितृवाक्यपालनम् इत्यादिसामान्यधर्माः रामायणे उक्ताः। एवं विवाहानन्तरं स्त्रिया कर्तव्याः पतिभक्तिः, पतिशुश्रूषा इत्यादिविषयाः अपि अधिकतया वर्णिताः सन्ति । स्त्रियं कौमारे तस्याः पिता रक्षति, यौवने भर्ता रक्षति, वार्धक्ये पुत्राः रक्षन्ति इति अयोध्याकाण्डे सीतया उक्तम् -

पिता रक्षति कौमारे भर्ता रक्षति यौवने।

पुत्रा रक्षन्ति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति॥ इति ।

विवाहानन्तरं भर्ता एव स्त्रीणां प्रत्यक्षदैवतम् , सः गुणवान् वा भवतु दुर्गुणो वा भवतु । भर्तृसेवा एव स्त्रीणां मुख्यधर्मः। अत एव नारी धनधान्यैः सम्पूर्णापि, पुत्रिण्यपि , पत्युः अभावे लोके विधवा इत्युच्यते। तदुक्तम् - भर्ता तु खलु नारीणां गुणवान् निर्गुणोऽपि वा।

धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम्॥ [अयोध्याकाण्डः ६२ ८]

पतिहीना तु या नारी कामं भवतु पुत्रिणी।

धनधान्यैः सुपूर्णाऽपि विधवेत्युच्यते जनैः॥ [किष्किन्धाकाण्डः (२३) १२] इति।

कन्यायै पित्रा मात्रा च यद्दत्तं मनस्सन्तोषादिकं तत्तु स्वल्पमेव। परन्तु अपरिमितमनस्सन्तुष्टेः दाता अस्ति तस्याः भर्ता एव । तादृशभर्तुः पूजनम् एव श्रेष्ठतमं भवति इति अयोध्याकाण्डे प्रदर्शितम् -

मितं ददाति हि पिता मितं माता मितं सुतः।

अमितस्य हि दातारं भर्तारं का न पूजयेत्॥ [अयोध्याकाण्डः (३९) ३१] इति ।

माता, पिता, भ्राता इत्यादिबन्धुजनाः स्वस्वकर्मानुसारेण परलोके सुखं प्राप्नुवन्ति । परन्तु भार्या भर्तृपुण्यफलमपि प्राप्नोति इत्युक्तम् अयोध्याकाण्डे -

आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषाः।स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते॥

भर्तुर्भाग्यं तु भार्यैका प्राप्नोति पुरुषर्षभ॥ [अयोध्याकाण्डः (२७) ३, ४] इति ।

स्त्रियै श्रेयः प्राप्तये पिता माता सखीजनादयः इत्याद्यपेक्षया तस्याः पतिः एव मुख्यहेतुः भवति। अतः यावत्पर्यन्तं भर्ता जीवति तावत्पर्यन्तं तस्य शुश्रूषाकरणम् एव भार्यायाः सनातनः धर्मः । तदुक्तम् -

न पिता नात्मजो नात्मा न माता न सखीजनः।

इह प्रेत्य च नारीणां पतिरेको गतिः सदा॥ [अयोध्याकाण्डः (२७) ५]

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः।

शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः॥ [अयोध्याकाण्डः (२४) १३] इति।

भर्तुः आराधनं , देवताराधनम् इत्युभयमपि अत्यावश्यकम् । पतिशुश्रूषायां नियुक्ता पत्नी अकस्मात् देवतोपासनां कर्तुं न समर्था इति चेत् तदापि दोषः न संभवति । परन्तु पतिशुश्रूषां विहाय देवतोपासनामेव या नारी आचरति सा पापिनां गतिं प्राप्नोति इति रामायणे सूचितम् -

भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम्।

अपि या निर्नमस्कारा निवृत्ता देवपूजनात्॥

व्रतोपवासनिरता या नारी परमोत्तमा।

भर्तारं नानुवर्तेत सा च पापगतिर्भवेत्॥ [अयोध्याकाण्डः (२४) २७, २५] इति।

या भार्या आपत्काले तस्याः भर्तारं त्यजति सा अधमा । उत्तमा स्त्री तु , तस्याः भर्ता एव उत्कृष्टदेवः इति मत्वा जीवनं करोति। नगरस्थः वा ग्रामस्थः वा, सुरूपवान् वा कुरूपवान् वा, सुशीलवान् वा दुःशीलवान् वा, धनयुक्तः वा धनवर्जितः वा इत्यादि चिन्तां विहाय या स्त्री भर्तारं एव दैवतं इति भावयति सा एव इहलोके परलोके च उत्तमगतिं प्राप्नोति इति विषयः पतिव्रतानसूयाद्वारा रामायणे सूचितम्-

असत्यः सर्वलोकेऽस्मिन् सततं यत्कृता प्रियैः।

भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः॥ [अयोध्याकाण्डः (३९) २२]

नगरस्थो वा वनस्थो वा शुभो वा यदि वाऽशुभः।

यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः॥

दुःशीलः कामवृतो वा धनैर्वा परिवर्जितः।

स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः॥

[अयोध्याकाण्डः (११७) २३-२४] इति।

अतः इहलोके परलोके च स्त्रीणां श्रेयःप्राप्तये पतिशुश्रूषा एव उत्तमः मार्गः । भर्तुः कालानन्तरं सा पुत्रेण रक्षितव्या । पुत्रस्य अभावे ज्ञातिभिः रक्षितव्या । परन्तु पुनरपि पितुः गृहवासः तासां न सूचितः। यथा -

गतिरेका पतिर्नार्याः द्वितीया गतिरात्मजः।

तृतीया ज्ञातयो राजन् चतुर्थी नेह विद्यते॥ [अयोध्याकाण्डः (६१) २४] इति ।

एतावता रामायणाख्यरत्नाकरात् 'पितृभक्तिः' 'स्त्रीधर्मः' इति शीर्षकद्वयम् अधिकृत्य यथामति निरूपितम्। वाचकदोषाः क्षन्तव्याः॥

# वसिष्ठोपदेशः

डा. पि.पि. श्रीधर उपाध्यायः

सहायकाचार्यः, न्यायविभागः

मद्रपुरी संस्कृत महाविद्यालयः

मयूरपुरी, मद्रपुरी

चतुर्मुखब्रह्मणः मानसपुत्रेषु एकः वसिष्ठः। सप्तर्षिगणमध्ये अग्रगण्यः तपसां वरिष्ठः रघुकुलस्य कुलगुरुः। आत्मनः असदृशतपःप्रभावेन गाधिसुतस्य विश्वामित्रस्य अत्युज्वलशस्त्रास्त्रमपि तृणवत् नाशितवान्। गायत्रीमन्त्रद्रष्टुः विश्वामित्रस्यापि ब्रह्मर्षित्वप्राप्तौ मुख्यकारणीभूतोऽयं वसिष्ठः। कार्येषु कुशलः बुद्धिमान् वसिष्ठः बहुषु सन्दर्भेषु क्लेशेन तप्यमानस्य दशरथस्य ज्ञानोपदेशं कृत्वा सन्मार्गप्रवर्तकः आसीत्।

यज्ञसंरक्षणाय रामं मे देहीति विश्वामित्रवचनं श्रुत्वा राजा दशरथः रामवियोगक्लेशेन वदति – अहमेव धनुष्पाणिः भूत्वा यावत्पर्यन्तं प्राणान् धारयिष्यामि तावत्पर्यन्तं निशाचरैः सह योत्स्ये। मम तु युद्धपरिचयः अस्ति। पूर्वं देवतानां सहायार्थं स्वर्गलोकं गत्वा राक्षसैः सह मया युद्धं कृतम्। इदानीमपि अहमेव युद्धं करोमि। भवतां व्रतचर्या सुरक्षिता निर्विघ्ना च भविष्यति। रामस्तु बालः, शत्रूणां बलाबलमपि न वेत्ति। युद्धयोग्यतामपि रामे न पश्यामि। अतः अहमेवागमिष्यामि । रामं नेतुं त्वं नार्हसि इति। तच्छ्रुत्वा विश्वामित्रः – भवतां मनोभिलाषां पूरयिष्यामि इत्युक्त्वा, इदानीम् अभिलाषा न पूर्यते चेत् तर्हि वचनभ्रष्टः मिथ्यावादी च स्यात् भवान्। परं त्वेतत् रघुकुलस्य भूषणं न भवति। *संभावितस्य चाकीर्तिः मरणादतिरिच्यते* इति वचनं तव विषये मिथ्या स्यात्। तथा च मिथ्याप्रतिज्ञः सन् सुहृद्भिः साकं सुखी भव इत्युक्त्वा कोपाविष्टः आसीत्। तेन महाननर्थः सञ्जातः।

तस्मिन् सन्दर्भे वसिष्ठः राजानम् उपदिशति – इक्ष्वाकूणां कुले जातः त्वं साक्षात् धर्मस्वरूपी। कदापि धर्ममार्गं त्यक्तुं नार्हसि। त्रिष्वपि लोकेषु धर्मात्मा इति विख्यातोऽसि। अधर्मे प्रवृत्तिर्मास्तु। यदि मिथ्याप्रतिज्ञः भवसि तर्हि त्वया पूर्वमाचरितम् अश्वमेधादि सत्कर्म सर्वमपि निष्फलं स्यात्। अतः रामं प्रेषय। रामस्य शस्त्रास्त्रज्ञानमस्ति वा न वा, तदन्यो विषयः। यतो हि विश्वामित्रेण रक्षितस्य रामस्य किमपि न भवति। तत्र सन्देहो मास्तु। विश्वामित्रस्तु साक्षात् धर्मस्वरूपी वीर्यवतां पुरुषाणां मध्ये श्रेष्ठः सकलविधशस्त्रास्त्रज्ञश्च। तादृशः पुरुषः लोके नास्ति यः

विश्वामित्रापेक्षया अधिकशस्त्रास्त्रज्ञानं प्राप्तः। देवाः , ऋषयः, गन्धर्वयक्षप्रवराः ये केचन सन्ति ते सर्वे शस्त्रास्त्रज्ञानविषये विश्वामित्रसमाः न भवन्ति। अतः रामगमनविषये सन्देहं त्यक्त्वा रामं प्रेषय। विश्वामित्रः असमर्थः, अत एव पुत्रं याचतीति विपरीतज्ञानं मास्तु। राक्षसाणां निग्रहणे स्वयं समर्थः। तथापि तव पुत्रहितार्थाय तव समीपे आगत्य याचति इति। वसिष्ठवचनेन प्रीतः निर्भीतः राजा रामं प्रेषितवान्।

अत्र वक्तव्यं किञ्चिदस्ति। दीर्घकालं विश्वामित्रेण साकं युद्धं कृत्वापि अतिथिरूपेणागतस्य विश्वामित्रस्योपरि वसिष्ठस्य द्वेषो वा कोपो वा न सञ्जातः। यतो हि वसिष्ठः गुणश्लाघी न तु दोषग्राही। महात्मनां विषये विरोधः श्रेयसे न भवति। अत एव कस्मिन् समये किं वक्तव्यं, किं कर्तव्यं, कथं प्रवर्तितव्यमिति ज्ञात्वैव दुष्टनिग्रहाय लोकहितार्थाय च रामं प्रेषय इति उपदिष्टवान्। तत्रापि राक्षसानां वधापेक्षया सीताविवाह एव मुख्योद्देशः। यतो हि सीताविवाह एव रावणादीनां निग्रहणे मुख्योपायः बीजभूतश्च। एष एव विश्वामित्रस्य अभिप्रायः। एतत् सर्वं ऋषिरहस्यं वसिष्ठवचनेन ज्ञायते।

अन्यस्मिन्नपि प्रसङ्गे - कैकेय्याः वरप्रार्थनानुसारेण सीतालक्ष्मणसहितः रामः वनं प्रति गन्तुमुद्युक्तवान्। तदा दशरथः आदिष्टवान् - वनेऽपि सुखेन जीवितुं सैन्यं धान्यकोषं सर्वमपि राममनुगच्छतु। नगरैकप्राप्याः पदार्थविशेषाः, विचित्रवस्त्राभरणधनादयः, आयुधानि, शकटानि च अनुगच्छन्तु इति। परन्तु रामः - तत्सर्वं स्वीकर्तुं मम इच्छा नास्ति। त्यक्तभोगस्य वने जीवतः मे अनेन परिवारेण किमपि प्रयोजनं नास्ति। कन्दमूलादीनां खननार्थं खनित्रं तत्स्थापनार्थं पिटकञ्च आवश्यकम्। ततोऽपि मुनिजनधारणयोग्यं चीरवस्त्रमत्यावश्यकम्। तदेव दीयतामित्युक्तवान्। तच्छ्रुत्वा त्वरया कैकेयी चीरवस्त्रमाहृत्य - हे राघव धार्यताम् इत्युक्तवती। रामलक्ष्मणौ चीरवस्त्रं धृतवन्तौ। परं सीता स्वस्याः अपि परिधानार्थं प्राप्तं चीरं दृष्ट्वा त्रस्ता अभूत्। चीरबन्धनासमर्था सीता , कथं वनवासिनः मुनयः चीरं बध्नन्ति इति मोहं प्राप्तवती। तदा रामः सीतायाः कौशेयस्योपरि चीरं बबन्ध। तादृशं प्रसङ्गं दृष्ट्वा सर्वेषां जनानां मनसि दुःखं जातम्।

तदा वसिष्ठः कोपेन कैकेयीं प्रति उक्तवान् - हे दुर्बुद्धे किमेतदाचरितम्। राजानं वञ्चयित्वा कुलमर्यादामुल्लङ्घयसि। रामः वनं प्रति गच्छति चेत् सीतयापि गन्तव्यमिति नियमो नास्ति। यतो हि तव याचने सीता नान्तर्भूता। अतः सा एव सिंहासनम् ऊढ्वा राज्यं करिष्यति। यतो हि *आत्मा हि दाराः* इति शास्त्रवचनानुसारेण गृहस्थाश्रमनिष्ठानां पुरुषाणां भार्या एव आत्मा। सीता तु रामस्य आत्मभूता। अत एव रामागमनपर्यन्तं सीता एव मेदिनीं पालयिष्यति। यदि तव निर्बन्धात् सीता रामेण साकं वनं गच्छेत् तर्हि वयं, इमे पुरजनाः, सदाराः, सपरिवाराः, च तामेव अनुयास्यामः।

भरतशत्रुघ्नावपि चीरवस्त्रं धृत्वा राममेव अनुसरतः। राज्ये तेषां वासः न भवति। जनपदशून्यमिमं राज्यं प्रजानामहितकारिणी त्वमेका एव स्वेच्छया पालय। अवश्यमेतद्वक्तव्यमस्ति –

न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः।

तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति॥ (अयो ३७ २९) इति।

रामरहितप्रदेशं राज्यं न भवति वनमेव भवति। रामसहितवनप्रदेशोऽपि राष्ट्रं भवति। भरतः दशरथस्य पुत्रः। सोऽपि राज्याधिकारी। परं तु रामाय न्यायेन ससन्तोषं पित्रा राज्यं दत्तमिति सर्वेषामस्माकं प्रत्यक्षमस्ति। तत्तु केवलं त्वया प्रतिबद्धम्। अतः पित्रा प्रीतिपूर्वकमदत्तां भूमिं भरतोऽपि न शासति। पितृघातिन्याः तवोपरि तस्य मातृवात्सल्यमपि न भवति। त्वमिदानीं क्षितितलात् गगनं प्रति उत्पतिष्यसि। भरतस्तु पितृवंशे प्राधान्येन स्थितः, पितृपितामहपरम्पराप्राप्तस्वकुलोचिताचारज्ञः। अतः ज्येष्ठे जाग्रति सति स्वयं राज्यं न करिष्यति। अस्तु भरतस्य विचारः।

लोके न हि स विद्येत यो न राममनुव्रतः। (अयो ३७ - ३२)

लोके त्वां विना सर्वे रामानुयायिनः एव। त्वया भरतहितार्थं यत्कृतं, तत्सर्वं तस्य अप्रियमेवेत्यत्र सन्देहो नास्ति। अधिकतया किं वक्तव्यम्। रामेण सह गच्छतः पशुपक्षिमृगादीन् अद्यैव द्रक्ष्यसि। अन्ततः स्वतः प्रवृत्तिमतः रामाभिमुखस्थितान् वृक्षगुल्मादीनपि द्रक्ष्यसि। अतः एतादृशविपरीतकार्यात् विमुखीभव। यत् चीरवस्त्रं दत्तं तत् स्वीकृत्य स्नुषायै सीतायै उत्तमान्याभरणानि दीयन्ताम्। चीरपरिधानं विधवाया एव युक्तम् न तु जीवत्पतिकायाः सीतायाः। अपि च रामवनवासः इष्टः त्वया। न तु सीतावनवासोऽपि। आभरणेन अलङ्कृता सीता रामेण साकं गच्छतु। यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री। (अयो. ३७. ३६) यानैः परिचारकैः वस्त्रैः सहिता सीता गच्छतु। अतः कस्मिन्नपि विषये सीतोपरि निर्बन्धः मास्तु। इति।

वसिष्ठवचने किञ्चित् वक्तव्यमस्ति। यत्र विरोधः तत्रैव परिहारः। कैकेय्याः विरोधस्तु रामराज्याभिषेके। न तु सीताविषये। अतः विरोधस्थले एव वनवासरूपः परिहारः। सोऽपि रामस्यैव। न तु सीतायाः। तथा च सीताया राज्यपरिपालनविषये कोऽपि क्लेशो नास्तीति सूक्ष्मदृष्ट्या वसिष्ठेनोक्तं सीतया न गन्तव्यमिति। अपि च "*अर्धो वा एष आत्मनो यत्पत्नी*" इति वेदवाक्यं स्मृत्वा रामस्येयमात्मा रामवत् सकलकार्यधुरन्धरा समर्था च, इत्यपि कारणात् वसिष्ठेनोक्तं सीतया न गन्तव्यमिति।

॥ श्रीकृष्णार्पणमस्तु॥

# रामायणे धर्ममीमांसा

Dr. S.Venugopalan
Associate Professor & HOD
SCSVMV University
Enathur, Kanchipuram-631561

कूजन्तं राम रामेति मधुरं मधुराक्षरम्। आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्॥

रामाय रामभद्राय रामचन्द्राय वेधसे। रघुनाथाय नाथाय सीतायाः पतये नमः॥

जगत्यस्मिन् अनेके देशाः, अनेकानि राष्ट्राणि, राज्यानि च विकीर्णानि सन्ति। तत्र सर्वत्रापि जनानां जीवितं तत्तद्देशजुषां ज्येष्ठानां पूर्वतनानां बहोः कालात् परम्परया अनुवर्त्यमानानां जीवनशैलीमाधारीकृत्यैव भवति। सा एव जीवनशैली संस्कृत्यपरपर्यायतया परिगण्यते। तादृशी संस्कृतिः प्रतिदेशं, प्रतिराष्ट्रं, विलक्षणं दृश्यते। तत्तद्देशे वसतां भोजनविषये, वस्त्रधारणे, सामाजिकव्यवहारेषु वा भाषायां चेति सर्वत्र वयं तत्तद्देशस्य विलक्षणां संस्कृतिं साक्षात्कुर्म एव। सा एव संस्कृतिः इतरेभ्यः समाजेभ्यः तान् पृथक्करोति। सा एव संस्कृतिः तद्देशस्य नागरिकतां निश्चिनोति। इतरेषामपि तद्देशविषयकः परिचयः तादृश एव भवति। तादृशः कश्चन परिचयः अस्माकं भारतभूमेरपि भवति। भारतं नाम किम्? किंपरिमितस्य भूभागस्य भारतत्वम् इति पृच्छ्यमाने विष्णुपुराणवचनमेव अत्र मार्गं दर्शयति।

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥ (विष्णुपुराणम् 2.3.1) इति

तथा च अस्माकं भूमेः तन्नाम दाक्षिणात्यसमुद्रात् उत्तरभागे हिमवत्पर्वतपर्यन्तं विद्यमानायाः भूमेः भारतम् इति व्यपदेशः भवति। तत्र जनिमतामस्माकं भारती इति च परिचयः दत्तो भवति। तत्र भाशब्दः प्रकाशवाची लक्षणावृत्त्या ज्ञानार्थकः। रताः इति प्रीतियुक्ताः इत्यर्थः। तेन ज्ञानेप्सूनां भूमिः इयम् इति ज्ञायते। तच्च ज्ञानं स्वयं प्रकाशमयं परम्ब्रह्मैव भवति यस्य वाचकः प्रणवः यन्मूलाः अन्ये मन्त्राश्च ये वेदसंज्ञाभाजश्च भवन्ति। स एव वेदः शब्दात्मकः सृष्टेः अपि कारणं भवति इति उपनिषदां निश्चयः। ऋषयः ये पुरातनाः अनादिकालात् एव प्रवर्तमानस्य संसारस्यास्य समूलमुन्मूलनाय प्रयतमानाः वनगिरिगह्वरादिषु तपश्चेरुः। तेषां तपसःफलमेव वेदः। आकाशे सर्वदा तद्गुणकतया एव वर्तमानाः ऋषीणां

श्रुतिगोचरा अभूवन् इति तेषां शब्दानां नित्यत्वावगमोऽपि। एवं च नित्यैः वेदैः नित्यस्य परम्ब्रह्मणः प्रतिपादकैः बोधितात्मतत्त्वा इमे ऋषयः तमेव वेदं लोकोद्धारार्थं स्वीयेभ्यः अन्येभ्यः ददुः। एवं भूमौ जनसमूहे प्रचारं प्राप्तस्यास्य वेदस्य प्रतिनिधिरूपेण वेदार्थप्रकाशिकाः तदुक्ततत्त्वार्थविचारिकाः स्मृतिरूपाः पुराण-इतिहासरूपाश्च अनेकाः शब्दराशयः समाजस्य व्यावहारिकीं गतिं व्यवस्थापयन्ति स्म। अतः एव दृश्यन्ते सनातनभारतस्य परिचायकतया इमे वेदाः, स्मृतयः इतिहासाः, पुराणानि चेति। तत्र वेदाः शब्दराशयः स्वरप्रधानाः उच्चारणे प्रयोगे वा लघुदोषे आपतितेऽपि अनभीप्सितफलप्रदा भवेयुरिति हेतोः एकेषामेव हस्ते दत्ता तत्परिपालनविधौ। परं वेदार्थाः ये समाजहिताय प्रभवन्ति, तेषां प्रकाशनायैव उद्भूताः ये स्मृत्यादि-इतिहासान्ताः ग्रन्थाः·ते जनसमाजे प्रगल्भतया प्रचारं लेभिरे। श्रीमद्रामायणं महाभारतञ्चेति द्वौ इतिहासौ आबालगोपालं समाजं वेदमार्गे समुन्नयनायैव भगवता एव प्रपञ्चितौ। इमे सर्वेऽपि आवेदात् आस्मृतेः इतिहासपुराणपर्यन्तमपि विस्तृताः तत्त्वविशेषाः एव धर्मशब्दवाच्याः भवन्ति। "धारणात् धर्म उच्यते" इति वाक्यानुसारं समग्रां पृथ्वीं सन्मार्गे चारयन्ति इमे वेदाः, तदनुचरग्रन्थाः सर्वेऽपि।

"धर्मो विश्वस्य जगतः प्रतिष्ठा", "धर्मेण पापमपनुदति", "धर्मे सर्वं प्रतिष्ठितम्"(तै.कृ.य.आ.10) इत्यादिवाक्यानि धर्मस्य विश्वप्रतिष्ठापकत्वं, पापापनोदकत्वं च ऊरीकुर्वन्ति। तत्र वेदादिषु प्रतिपादिताः धर्माः एव प्रजानां दैनन्दिनजीवनाय मार्गदर्शका भवन्ति। तत्र रामायणं, महाभारतञ्च द्वारौ भवतः। तत्र धर्मस्य मुखं यत् सत्यं भवति तदेव रामायणस्य आधारशिला। अत्र श्रीरामः सत्यवादी, धर्मस्य प्रगोप्ता चेति श्रीमद्रामायणस्य आदिमश्लोकेषु एव स्पष्टं दृश्यते "धर्मज्ञश्च कृतज्ञश्च सत्यवादी दृढव्रतः" इत्येवम्। "रामो विग्रहवान् धर्मः" इत्यपि प्रसिद्धं वचनम्। "यं पालयसि धर्मं त्वं धृत्या च नियमेन च। स वै राघवशार्दूल धर्मः त्वामभिरक्षतु" इति कौसल्यायाः वचनमपि रामस्य धर्मपालकत्वं द्रढयति। अनयोः इतिहासयोः मध्ये रामायणे श्रीरामः, महाभारते युधिष्ठिरश्च धर्मात्मानौ धर्मरक्षकौ इति हेतोः बाहुल्येन एतौ द्वौ एव भारते सर्वेषां मार्गदर्शकौ भवतः। तथा च तादृशस्य श्रीरामचरितापरपर्यायस्य रामायणस्य प्रभावः आसेतुहिमाचलम्, आकाश्मीरकुमारि जनानां मध्ये वरीवर्ति। रामायणकथाश्रवणे जनानां कौतुकता विलक्षणा भवति। पौनःपुन्येन तामेव कथां शुश्रूषवो जनाः विभिन्नमाध्यमेन रामकथां पश्यन्ति शृण्वन्ति नृत्यन्ति च। तादृशेऽस्मिन् रामायणे श्रीमद्वाल्मीकिविरचिते धर्मस्य मीमांसा, तन्नाम तस्य पूज्यत्वार्थविचारः करणीय इति आदिष्टोऽहं सागरादस्मात् कतिचन धर्मप्रतिपादकानंशान् वालिवधप्रकरणादुद्धर्तुं समुत्सहे।

तथा च किष्किन्धाकाण्डे – सुग्रीवभ्राता वाली कदाचित् दुन्दुभिनाम्ना असुरेण युध्यन् गुहां प्रविष्टः तत्रैव कश्चित् कालं युद्धे एव व्यग्रः तस्थौ। तत्र चिरायमाणं भ्रातरं विचिन्त्य, असुरेण भ्राता निहतो वेति सन्दिहानस्सुग्रीवः बृहच्छिलामेकां गुहाद्वारे निक्षिप्य बिलं पिधाय च गतः। कथञ्चित् असुरं निहत्य बिलमुखात् शिलाम् अपावृत्य राज्यं प्रविष्टः वाली स्वभ्रातरं स्वाहितकारिणं मत्वा तं सम्यक् प्रताड्य तत्पत्नीं रुमां च स्वायत्तीकृत्य सुग्रीवं राज्यात् चिक्षेप। पत्न्या राज्येन च विहीनः सुग्रीवः इतस्ततः भ्राम्यन् मतङ्गमुनिजुष्टम् आश्रमप्रदेशं समागतः। तत्र असुरस्य मृतकलेवरं प्रक्षिप्तवान् वाली मुनिना - आश्रमपदं प्राप्तश्चेत् सर्वथा नङ्क्ष्यतीति - शप्तः सन् तत्प्रदेशं नागच्छति इति विदित्वा तत्रैव वस्तुं मतिं चकार। ततःप्रभृति हनूमत्प्रभृतिभिः कतिभिश्चन अमात्यैः अनुयायिभिः परिवृतः सुग्रीवः कथं वा पुनः अहं स्वपत्नीं राज्यञ्च प्राप्नुयामिति शोचमानः दण्डकारण्यं प्रविष्टं श्रीरामं सीताविहीनं भ्रातृसहितं दृष्ट्वा तस्मिन् वालिप्रेषिततवं सन्दिहानः हनूमद्द्वारा तद्विषये सम्यग्विचार्य श्रीरामो मत्सहायो भवितुमर्हति इति विनिश्चित्य श्रीरामेण सह वैधं सख्यं जगाम। परस्परम् अग्निसाक्षिकम् अन्यतरस्य कार्यं कथञ्चित् अपि साधयितुम् प्रतिज्ञातवन्तौ तौ द्वावपि रामसुग्रीवौ । आदौ श्रीरामः सुग्रीवकार्यं साधयितुं मतिं कुर्वाणः सुग्रीवभ्रातरं वालिनं वृक्षपृष्ठस्थितः आत्मानं तिरोदधत् तं शरैः विव्याध। रामशरैः निहतो वाली श्रीरामं बहुधा निन्दन् कथं धर्मरक्षणव्रतमनुष्ठितं त्वया यदयम् अधर्मविधया विटपान्तरितः अन्यत्र कृतमतिं हन्तुं प्रयतते स्मेति।

प्रकरणेऽस्मिन् श्रीरामेण वाली विटपान्तरिततया आत्मानं गोपयता भीरुणेव कथं हतः इति प्रश्नः। तत्र धर्मव्यतिकरः श्रीरामेण कृतः इति स्थूलदर्शनेन आपात्यते। परमत्र वैधमेव वालिवधः श्रीरामेण सम्पादितो भवति इति निरूपयितुं प्रयत्नः विधीयतेऽस्माभिः।

तथा च सप्तदशे सर्गे किष्किन्धाकाण्डे श्रीरामकृतः वालिवधः निरूप्यते।

"ततश्शरेणाभिहतः रामेण रणकर्कशः। पपात सहसा वाली निकृत्त इव पादपः"॥ इत्यारभ्य सप्तसु सर्गेषु वालिवधप्रकरणं चतुर्विंशसर्गपर्यन्तमपि व्याप्तं दृश्यते। अत्र वालिवधप्रकरणे बहवो धर्माः चर्च्यन्ते। रामेण समस्तोऽपि धर्मः क्षात्रः तिरस्कृतः। उल्लङ्घितश्चेति महता उच्चैः स्वरेण तस्मिन् आक्षेपः क्रियते। तस्मिन् कृताः अधिक्षेपाः धर्मशास्त्रदृष्ट्या कथं समर्थनीया भवेयुरिति विचारः किञ्चिद्विक्रियते। तत्र रामेण निपातितः वाली-- (कि. 17. 16,19)

**"त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः। पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः॥"**

**"दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः। पार्थिवानां गुणा राजन् दण्डश्चापकारिषु॥"**

एवमेव– "न मामन्येन संरब्धं प्रमत्तम् वेद्धुमर्हसि । इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव॥"

"विषये वा पुरे वा ते यदा पापं करोम्यहम्। न च त्वामवजानेऽहं कस्मात् त्वं हंस्यकिल्बिषम्॥"

"फलमूलाशनं नित्यं वानरं वनगोचरम् । मामिहाप्रतियुध्यन्तमन्येन च समागतम्॥"

"भूमिर्हिरण्यं रूप्यं च निग्रहे कारणानि च । तत्र कस्ते वने लोभो मदीयेषु फलेषु वा॥"

"त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः । राजवृत्तेषु संकीर्णः शरासनपरायणः ॥"

"हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम्। किं वक्ष्यसि सताम् मध्ये कर्म कृत्वा जुगुप्सितम्॥"

"राजहा ब्रह्महा गोघ्नः चोरः प्राणिवधे रतः । नास्तिकः परिवेत्ता च सर्वे निरयगामिनः॥"

"अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम्। अभक्ष्याणि च मांसानि त्वद्विधैः धर्मचारिभिः ॥"

"पञ्च पञ्चनखाः भक्ष्याः ब्रह्म क्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मः च पंचमः ॥"

"मैथिलीमहमेकाह्ना तव चानीतवान् भवेः ॥" (कि. १-१७-२१,२४,२५,३१ , ३३ ,३५,३६, ४९ )

इत्यादि कठोरैः वचनैः प्रश्नान् पृच्छति। तस्यैते सर्वेऽपि प्रश्नाः आपाततः समीचीना एव इति कदाचित् केषाञ्चित् भायात्। तथैव गृहीत्वाऽपि अद्यत्वे विवादरङ्गेषु द्राविड्यां यदुच्यते पंट्टिमन्रम् इति, तादृशेषु विचाररङ्गेषु बहुधा चर्च्यन्तेऽपि। तथाऽपि धर्ममूर्तिः श्रीरामः अधर्ममाचरितुं कथं शक्नोति? सर्वथा न शक्नोत्येव। अतश्च पूर्वोक्तानां प्रश्नानां समाधानमन्वेष्टव्यमस्माभिः। तथा हि अहेतुकः प्राणिवधः तावत् अयुक्तो निषिद्धश्च। "मा हिंस्यात् सर्वाभूतानि" इति श्रुतिवचनात्। तत्र मनुरपि "न त्वेव तु वृथा हन्तुं पशुमिच्छेत् कदाचन" (5.37) इति स्पष्टं वक्ति। रामस्य वालिहनने विचार्यमाणे-हेतुरपि नास्ति, यतः सः 1)रिपुः नास्ति 2)कण्टको नास्ति 3)एनस्वानपि नास्ति 4)उपयोगार्हमांसचर्मविषाणादिमानपि नास्ति 5)तद्धनने पापाभावोऽपि नास्ति 6)अस्य हननेन सीता उपलभ्येत इत्यापि निश्चयो नास्ति। एवं प्रकारेण सर्वथा चिन्त्यमाने कुत्रापि वयं वालिवधं समर्थयितुं न शक्ष्याम एव। यतः रामविषये वाली निरपराधी एव। उभयोः कदापि परस्परदर्शनमपि नासीदेव एतावता। एवमेव "रोमाञ्चे क्षुद्रशत्रौ च तरोरङ्गे च कण्टकः" इति निघण्टुवचनानुसारम् अयं वाली क्षुद्रशत्रुत्वमपि न भजते। अतः कण्टकत्वमपि तस्मिन्नास्ति। तृतीयतया केवलपापाचरणेन कश्चित् मृत्युदण्डं प्राप्तुं नार्हति, वध्यत्वेन परिगणितेषु सुवर्णस्तेयादिषु कोऽपि दोषः तेन न कृतः, चतुर्थतया वानरस्य मांसं, चर्म वा शिष्टैरिति न, दुष्टैः अपि न गृह्यते। तथा च मनुना "श्वाविडं शल्यकं गोधा खड्गकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुः..." इति परिगणितेषु जन्तुषु वानरो नास्ति। अतः वानरमांसस्य भक्षणे शिष्टाः न प्रवर्तन्ते एव। एवमेव इतरेषां मृगाणां शरीरावयवाः यथा

यज्ञादिषु वैदिकेषु कर्मसु उपयुज्यन्ते, यथा कृष्णाजिनं, कृष्णविषाणम्, अनडुद्वराहादीनां चर्म इत्यादिकं, तथा वानरस्य न कोऽपि अवयवः शिष्टकर्मसु दुष्टाभिचारादिष्वपि प्रयोज्यतया कुत्रापि न दृश्यते। लौकिकजीवनेऽपि अव्युष्ट्रवृकरोम्णाम् उपयोगः कम्बलसदृशवस्त्रनिर्माणे क्रियते, एवमेव गजदन्तः, शार्दूलनखाः, गोमहिष्यादीनां चर्माणि, भिन्नभिन्नावश्यकतापूरणाय उपयुज्यन्ते। वानरस्य कोऽपि अवयवः लौकिकजीवनेऽपि नोपयुज्यते। पञ्चमतया कपिवधे प्रायश्चित्तस्य करणीयत्वं दृश्यते शास्त्रेषु। तथा च मनुः "हत्वा हंसं बलाकञ्च वकं बर्हिणमेव च। वानरं श्येनभासौ च स्पर्शयेत् ब्राह्मणाय गाम्"॥ इति वानरवधे गोदानं, प्रायश्चित्ततया निर्दिशति। ज्ञानपूर्वके पापाचरणे प्रायश्चित्तस्य प्रयोजनाभावः शास्त्रेषु सुष्ठूक्त एव।

एवमेव षष्ठतया निर्दिष्टः सीताप्राप्तिविषयकः प्रश्नोऽपि। सीतार्थे वालिवधापेक्षया तत्प्रार्थनया, आज्ञया वा वाली तत्कार्यं लीलया अकरिष्यत् यतः पूर्वमेव रावणः वालिना ताडितो भायितश्च। तथा च पूर्वोक्तैः षड्भिरपि प्रश्नैः वालिवधः रामकृतः अन्याय्य एव इति सामान्यजनानां बुद्धौ उदियात्।

तथापि अष्टादशे सर्गे श्रीरामः एतेषां सर्वेषां प्रश्नानां समाधानं ददाति। तथा च अष्टादशसर्गे -

धर्ममर्थं च कामं च समयं चापि लौकिकम् । अविज्ञाय कथम् बाल्यात् मामिहाद्य विगर्हसे ॥
यवीयान् आत्मनः पुत्रः शिष्यः चापि गुणोदितः । पुत्रवत् ते त्रयः चिन्त्या धर्मः चैवात्र कारणम् ॥
अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः । रुमायां वर्तसे कामात् स्नुषायां पाप कर्मकृत् ॥
तद् व्यतीतस्य ते धर्मात् कामवृत्तस्य वानर । भ्रातृभार्याभिमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥
न च ते मर्षये पापं क्षत्रियोऽहम् कुलोद्गतः । औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ॥
प्रचरेत नरः कामात् तस्य दण्डो वधः स्मृतः ।
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा । दारराज्यनिमित्तं च निःश्रेयसकरः स मे ॥
प्रतिज्ञा च मया दत्ता तदा वानर संनिधौ । प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ॥
न मे तत्र मनस्तापो न मन्युर्हरिपुङ्गव । वागुराभिश्च पाशैश्च कूटैश्च विविधैः नराः ॥
प्रमत्तान् अप्रमत्तान् वा नरा मांसाशिनो भृशम् । विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥
अयुध्यन् प्रतियुध्यन् वा यस्माच्छाखामृगो ह्यसि ॥ (४-१८-४,१४,१९,२०,२२,२६,२७,३७,३९,४०)

इत्येवमादिभिः वचनैः राजारामः प्रत्युत्तरं ददाति वालिने। तत्र प्रधानतया भ्रातृभार्यापरिग्रहरूपात् धर्मातिक्रमात् प्रतिज्ञातार्थस्य अग्निसाक्षिकं निर्वहणीयत्वात् मृगयायां मृगवधस्य राज्ञां धर्मत्वात्, रामकृतः सर्वोऽपि धर्म एव इति वक्तुं शक्येऽपि तत्रापि आक्षेपः भवितुमर्हति। तथा च भ्रातृभार्या परिग्रहं सुग्रीवोऽपि

कृतवान् तर्हि सुग्रीवं त्यक्त्वा वालिनः मात्रं वधकरणे हेतुः न स्यादिति, एवमेव प्रतिज्ञातार्थनिर्वहणं यावत् मुख्यं तावत् अहिंसाधर्मपालनेऽपि अस्त्येव।

तथा च अहिंसापालनप्रतिज्ञानिर्वहणयोः मध्ये कतरः प्रबलतरो धर्मः? इति चेत् अहिंसा एव भवितुमर्हति, सर्वधर्मसम्मतत्वात्। एवमेव मृगयावधः राज्ञां धर्मश्चेदपि सन्दर्भेऽस्मिन् मृगयानिमित्तं हननं नैव संभवति। पित्राज्ञापरिपालनधर्माचरणार्थं वनं प्राप्तो रामः मृगयाकरणे अनधिकृत एव। अतश्च रामदत्ताः सर्वेऽपि परिहाराः अनुचिताः इति आक्षेप्तृणाम् अभिप्रायः स्यात्। तथापि तत्र धर्मोऽस्त्येव। तथा च आरम्भतः वालिना पृष्टानां सर्वेषां प्रश्नानां समाधानं धर्मदृष्ट्या कथं सङ्गतं भवति इति किञ्चित् परिशीलयामः।

तत्र वाली तावत् स्वराज्ये स्थित्वा धर्मातिक्रमं भ्रातृजायापरिग्रहादिरूपं कृतवान्। धर्मदूषकाः सर्वेऽपि राज्ञा धर्मशासकेन अवश्यं यथाशास्त्रं दण्डनीया एव। तथा च राजधर्मः ।

**पापमाचरतो यत्र कर्मणा व्याहतेन च। प्रियस्यापि न मृष्येत स राज्ञो धर्म उच्यते॥** इति।

मानवे धर्मशास्त्रेऽपि –

**अधार्मिकान् त्रिभिः न्यायैः विगृह्णीयात् प्रयत्नतः। निरोधनेन दण्डेन विविधेन वधेन च ॥**

इति दृश्यते। एवमेव दण्डस्यादण्डनेऽपि दोषः। तद्यथा–

**साहसे वर्तमानं तु योऽमर्षयति पार्थिवः। स विनाशं व्रजत्याशु विद्वेषं वा नियच्छति इति दृश्यते।**

सन्दर्भेऽस्मिन् तिलकाख्यव्याख्यानविशेषे नागेशाचार्यस्य वचनमिदं - ननु "भ्रातुर्ज्येष्ठस्य यो भार्यां जीवितो महिषीं प्रियाम्। धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः॥" इत्यग्रे प्रायोपवेशसमयेऽङ्गदोक्तेः सुग्रीवस्यापि ज्येष्ठभ्रातुः पितृसमस्य भार्यावमर्शनं तुल्यमित्यत आह-- अस्य त्वमिति। धरमाणस्य प्राणान्धारयत एव जीवतस्त्वया निश्चीयमानजीवनस्यैव पत्न्यां तव स्नुषाभूतायां रुमायां यतो वर्तसे, अतस्त्वं स्पष्टं पापकर्मकृत्। सुग्रीवस्तु तव जीवननिश्चयाभावात्त्वत्पत्न्यां तारायां प्रागवर्तिष्ट अतः परं वर्त्स्यति च। किञ्च त्रैवर्णिकेष्वपि देवरस्य मृतभ्रातृस्त्रियामपुत्रायां वृत्तिदर्शनात्तिर्यग्योनिषु तस्यां वृत्तिर्न दोषः। तथावृत्तौ च मरणज्ञानमेव प्रयोजकं तिर्यक्ष्विति भगवदाशयः। अनेन त्रैवर्णिकेतरस्त्रीणां मृतभर्तृकाणां तरुणीनां स्वजातीयपुरुषाङ्गीकारो नाधर्म इति सूचितम्। दृश्यते च तथा व्यवहारः शूद्रादिजातौ। न च मनुष्याधिकारस्य निषेधादिशास्त्रस्य कथं तिर्यक्षु प्रवृत्तिरिति वाच्यम्। तिर्यग्योनेरपि मनुष्यवद्राजादि-व्यवहारदर्शनेन मनुष्यतुल्यज्ञानवत्त्वादस्त्येवायं दोष इत्याशयात्। किञ्च धर्मेऽनधिकारिणामपीन्द्रादीनां

वृत्रवधादौ ब्रह्महत्यादिदोषस्मरणेन निषेधेषु तदतिक्रमप्रायश्चित्तादौ च देवानामधिकारवदेषामप्यधिकारे बाधकाभावः। किञ्च देवादीनां स्वयजनीयेन्द्रान्तराभावादनधिकार इति पूर्वमीमांसायां निर्णीतम्। एवं च तदनपेक्षदानादिधर्मेषु ब्रह्मविद्यायां चाधिकारोऽस्त्येवेत्युत्तरमीमांसायां स्पष्टम्। तद्वदीदृशानां ज्ञानवतां तिरश्चामप्यधिकारे बाधकाभावः।

किञ्च सर्वदेवतावाचकपदानामन्तर्यामीश्वरवाचकत्वेन सर्वत्र देवानामधिकारोऽस्त्येव। न च ब्राह्मणत्वाद्यभावात्तेषामनधिकारः, तेषामपि क्षत्रियत्वाद्वैवस्वतमन्वादेरिव। अत एव चन्द्रवरुणादीनां यज्ञः स्मर्यते पुराणेषु। तत्र तत्र कर्मण्यर्थवादतः फलकल्पनवत्पुराणस्यार्थवादैस्तदधिकारस्यापि कल्पयितुं युक्तत्वात्। किंञ्च त्रैवर्णिकस्याधिकार इत्यत्र त्रैवर्णिकपदं वेदतदर्थज्ञानवत्परम्। अतो देवादीनां तदधिकारः सिद्ध इति भगवतो व्यासवाल्मीकिप्रभृतीनां चाशयः। जैमिनेस्त्वेतदंशेऽज्ञानमेव। अत एव तद्दूरीकरणार्थं मार्कण्डेयेनात्मानं प्रति धर्मान्पृच्छतो जैमिनेर्विन्ध्यारण्यवासितत्त्वज्ञपक्षिमुखेन धर्मबोधनं कृतम्। तेन हि पक्षिणां ज्ञानानधिकार इति स्वोक्तेस्तस्याविश्वासे जातेऽन्यत्रापि व्यासादिविरुद्धे स्वोक्तेऽर्थे तस्याप्रामाण्यग्रहो भविष्यतीति तदाशय इत्यन्यत्र विस्तरः। अत एव गृध्रराजस्य भगवता दाहादि कृतम्, अग्रे च संपातिना तद्भ्रात्रा करिष्यमाणमुदकदानादि नासंगतमिति दिक्॥

किञ्च **"दण्ड्ये यः पातयेत्दण्डं दण्ड्यो यश्चापि दण्ड्यते। कार्यकारणसिद्धार्थौ उभौ तौ नावसीदतः"** कि.का-18-61 इति श्लोकव्याख्यायामपि – "अत्रार्थे स्मृतिमुपन्यस्यति-- दण्ड्ये य इति। कार्यकारणेति भावप्रधानो निर्देशः। कार्यत्वं दण्ड्यत्वम्, कारणत्वं दण्डयितृत्वं, ताभ्यां सिद्धार्थौ निष्पन्नपरलोकप्रयोजनौ, अत एव नावसीदतः। एवं न्याय्यदण्डकर्तृत्वान्नाहमकृत्यकारी, जातदण्डत्वाच्च त्वमपि न तथेति भावः॥

अस्मिन्नेव सन्दर्भे शिरोमण्याख्यव्याख्यायामपि– "ननु पितृसदृशज्येष्ठभ्रातृभार्यावमर्शात् सुग्रीवस्यापि तथात्वमित्यत आह-- अस्येति। धरमाणस्य धारयतः प्राणानिति शेषः, जीवत इत्यर्थः, महात्मनः सुग्रीवस्य स्नुषायां पुत्रवधूसदृश्यां रुमायां तदभिधभार्यायां कामात् पापकर्मकृत् स्ववशीभूतकनिष्ठभ्रातृत्यागरूपपापकर्मकर्ता त्वं वर्तसे। एतेन सुग्रीवस्य त्वज्जीवनाभावनिश्चयात् त्वद्भार्यावमर्शे ऽपि न दोष इति, तव तु कनिष्ठजीवननिश्चये ऽपि तद्भार्यावमर्शात् शरणागतभ्रातृत्यागात् दोषसमूह इति च सूचितम्। मृतज्येष्ठभ्रातृभार्यापरिग्रहे न दोष इति धर्मशास्त्रे प्रसिद्धम्। अत एव "भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम्। धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः" इति वक्ष्यमाणप्रायोपवेशसमये अङ्गदोक्तौ जीवत इति विशेषणं संगच्छते। अत एव "देवराच्च सुतोत्पत्तिं कलौ

पञ्च विवर्जयेत्" इत्यादि संगच्छते। नच ह्यपेक्षया मनुष्याधिकारत्वादिति सूत्रभाष्यादौ मनुष्यमात्रस्यैव शास्त्रनियम्यत्वमिति सिद्धान्तितत्वात् वालिविषये धर्माधर्मविचारः सर्वज्ञेन परमात्मना रामेण कथं कृत इति वाच्यम् "तदुपर्यपि बादरायणः" इति तदुत्तरसूत्रभाष्यादौ गन्धर्वादीनामपि शास्त्रनियम्यत्वस्य सिद्धान्तितत्वेन वालिनो देवपुत्रत्वाद्देवत्वेनादोषात्। अत एव भगवत्पार्श्ववर्तिनां नन्दीश्वरगरुड-काकभुशुण्डादीनां वेदाधिकारो न विरुध्यते। अत एव सर्वज्ञपरमात्मरामकृता जटायुषः प्रमीतक्रिया तद्भ्रात्रा सम्पातिना करिष्यमाणोदकदानादि च संगच्छते। न च ब्राह्मणाद्युद्देश्येन कर्मबोधकप्रवृत्तेः देवादीनां तदभावात्कथं तद्विषयत्वमिति वाच्यं, तेषामपि कश्यपादिजन्यत्वादिना ब्राह्मणादित्वादिति दिक्॥

एवञ्च अनयोः सारांशस्तु –

अ) भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम्। धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः॥

आ) औरसीं भगिनीं वा ऽपि भार्यां वाप्यनुजस्य यः। प्रचरेत् यो नरः कामात्तस्य दण्डो वधः स्मृतः॥

इ) वाली हतस्सन्नेव निष्पापी इत्यत्र वचनम् उद्धृतं तत्त्वदीपिकाव्याख्याने –

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा।
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते। राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम्॥
(मनुः) इति।

तथा च तत्र दण्ड्यानां दण्डनात् दण्ड्यः शुद्धः भवति, पापात् मुक्तो भवति। तस्य दण्डस्य अदण्डने उभयोरपि दण्ड्यदण्डकयोः दोष एव इति शास्त्रम्। तद्यथा राजधर्मप्रकरणे शङ्खलिखितोपाख्यानं सर्वैरस्माभिः स्मर्तव्यम्॥

तत्र शङ्खलिखितौ नाम द्वौ भ्रातरौ धार्मिकौ आस्ताम्। तत्र ज्येष्ठे शङ्खे क्वचित् स्वाश्रमात् बहिः गते सति कनिष्ठः लिखितः भ्रातृगृहं प्रविष्टः तत्रोद्याने सुपक्वफलानि आलोक्य तत्सुगन्धरुचिभिराकृष्टः तानि फलानि भ्रात्रनुज्ञां विनैव अभक्षयत्। तावति आश्रमं प्रविष्ठवान् शङ्खः कनिष्ठकृतं फलभक्षणं स्वेनानुमतं नैवेति कारणात् स दण्ड्य इति मत्वा राजानं प्रति तं सम्प्रैषयत् दण्डग्रहणार्थम्। राजा च तं श्रुत्वा तस्य हस्तच्छेदम् अकरोत्। छिन्नहस्तः लिखितः भ्रातृसमक्षं पुनरागत्य क्षमां याचितुमुपक्रमते स्म। तदा भ्रातरि कनिष्ठे अनुकुष्टः ज्येष्ठः अनुकम्पया तं समीपस्थायां बाहुदा नद्यां स्नातुम् आदिदेश।ओमित्युक्त्वा भ्रात्रादेशं नदीस्नानेन पूरयतः तस्य तदा छिन्नो हस्तः पुनः उत्पन्नो दृष्टः। तदा सन्तुष्टः कनिष्ठः अतिशयं तं भ्रातरं निवेदयितुं वेगेन आगतः स्वभ्रातृमुखात् तस्य तपोबलेन जातोऽयमतिशय इति अश्रौषीत्। तदा लिखितः

भ्रातरं नत्वा स्वस्य पापात् मुक्तिः लब्धा इति सानन्दं न्यवेदयत्। तदा शङ्खः प्रत्युवाच – "एवमेतन्मयाकार्यं नाहं दण्डधरस्तव। स च पूतो नरपतिः त्वं चापि पितृभिस्सह (महाभारतम् – शान्तिपर्व – 23-50)" इत्यवादीत्। अनेन उपाख्यानेन राजा एव प्रजानां दण्ड्यानां दण्डधरः भवतीति स्पष्टं ज्ञायते। तत्र आपस्तम्बधर्मसूत्रेऽपि (वालिनः) अधर्माचरणविषये एवं शास्यते, "अबुद्धिपूर्वम् अलङ्कृतोयुवा परदारमनुप्रविशन् कुमारी वा वाचा बाध्यः। बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः। सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्येति (आ.ध.सू. 2-9-18,19,20)" दृश्यते।

एवमेव नारदीये धर्मसूत्रेऽपि "माता मातृष्वसा श्वश्रूः मातुलानी पितृष्वसा। पितृव्यसखि शिष्यस्त्री भगिनीतत्सखीस्नुषा॥ दुहिता चार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥ आसामन्यतमां गच्छन् गुरुतल्पग उच्यते। शिश्नस्योत्कृन्तनात्तत्र नान्यो दण्डो विधीयते (ना.ध.सू. 12.72,73,74)॥" इति

शिश्नच्छेदस्य सवृषणस्यैव शास्त्रे सम्मतत्वात्। किञ्च धृष्टः वाली चक्रवर्तिनं रामं दृष्ट्वा अर्हणार्हाय तस्मै दातव्यं गौरवमपि न दत्तवानिति वालिवचनादेव श्रृणुमः। तद्यथा –

"दृश्यमानस्तु युध्येथाः मया यदि नृपात्मज। अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया" । इति वचनेन तस्य दृप्तता स्पष्टं ज्ञायते। तथा सति तादृशस्य अशास्यस्य शासनं राजा अवश्यमेव कुर्यादिति भारतवचनमपि अत्र प्रमाणं भवति। तद्यथा "महाराजमनुष्येषु निन्द्यं यः सर्वमाचरेत्। स वध्यः सर्वलोकस्य निन्दितानि समाचरन्निति"॥ (महाभारतम्-05-उद्योगपर्व-159-10) अत एव भरतस्य प्रतिनिधिरूपेण दण्डाकरण्यं प्रविष्टो रामचन्द्रः "श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ। गृहीतौ धर्मकुशलौ तत्तथाचरितं भुवि॥ राजाभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥ शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते। राजात्वशासन्न्यायस्य तदेवाप्नोति किल्बिषम्"॥ (वा.रा 4-18-30,31,32) इति स्वस्य धर्मात् व्यभिचरितुमपि न शक्नोति। अतश्च वध्यान् दण्ड्यान् अवश्यं दण्डयेयमिति मत्वा स्वकर्तव्यं सम्यक् निरूढवान्। किञ्च भ्रातृजायापरिग्रहदोषः सुग्रीवविषयेऽपि योऽयमारोपितः सः अन्याय्यः, अस्थानेकृतः दोषारोपः च। यतः सः तारां भ्रातृजायां भ्रातुः वालिनः कालादनन्तरं जग्राह। न तु तस्मिन् जीवति सति। तदुक्तं धर्मशास्त्रेषु, "नष्टे मृते प्रव्रजिते क्लीबे च पतिते तथा। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" (पराशरस्मृतिः 4-30) इति। अतः धर्मव्यतिकरः अस्मिन् विषये सुग्रीवे आरोपयितुं न शक्यते। एवमेव अहिंसाचरणं, प्रतिज्ञापालन-

मित्युभयोर्मध्ये अहिंसापालनमपि धर्म एव इत्यतः कुतो वा प्रतिज्ञापालनं न त्यज्यतामिति प्रश्नोऽपि असमञ्जस एव। राज्ञां सर्वधर्मापेक्षया प्रतिज्ञापालनमेव प्रधानो धर्म इति अयोध्याकाण्डे – "क्षात्रं धर्ममहं वक्ष्ये (वा.रा.अयोध्या-101-20)" इत्यत्र धर्मशास्त्रपर्यालोचनायां ज्ञातुं शक्यते। तत्र महाभारते महाप्रस्थानिके शक्रं प्रति धर्मपुत्रस्य "प्रतिप्रदानं शरणागतस्य स्त्रिया वधोब्राह्मणस्वापहारः। मित्रद्रोहस्तानि चत्वारि शक्र! भक्तत्यागश्चैव समं मतो मे (महाभारतम्, महाप्रस्थानिकपर्व 3-15)" इति वचनमपि प्रमाणम्। इतरधर्मापेक्षया प्रतिज्ञापालनमेव प्रधानो धर्म इति विषये श्रीरामस्य लक्ष्मणपरित्यागः एव महाप्रमाणम्। तथा च उत्तरकाण्डे यावज्जीवं भक्त्या भ्रातुः सेवां कृतवतो लक्ष्मणस्य रामभक्तस्य विषये कथा श्रूयते। कदाचित् रामे राज्यं शासति सति तस्य अवतारलक्ष्यं निर्व्यूढमित्यतः पुनः सः वैकुण्ठं प्रतिनिवर्तेत इति परमं गुह्यं रहस्यं सर्वदेवताभिप्रेतं चतुर्मुखब्रह्मवचनं श्रीरामाय प्रतिबोधयितुमागतः मुनिवेषधारी कालः श्रीरामं निर्जने अवकाशे दिदृक्षते स्म। तदर्थं श्रीरामोऽपि लक्ष्मणं द्वारि पालकत्वेन संस्थाप्य मुनिवचनं शुश्राव। ततः पूर्वं कोऽपि नान्तः प्रविशेत् यावदहं मुनिना मन्त्रयिष्ये, यदि स्यादुपरोधः केनचिदपि कृतः, स मे वध्यः इति भ्रातरं लक्ष्मणमपि भर्त्सयति स्म। एवं कालरामयोः वार्तालापे प्रचलति सति तत्र प्राप्तवान् दुर्वासामहर्षिः सद्य एव श्रीरामः दर्शनीयः मया इति लक्ष्मणम् आदिष्टवान्। किञ्चित् प्रतीक्ष्यतां यावद्राजा स्वीयम् अतिमुख्यं कार्यं मन्त्रालोचनरूपं निर्वर्त्य ततः भवन्तं द्रक्ष्यतीति लक्ष्मणोक्तं वचनं तिरस्कृत्य दुर्वासाः तु – यदि मां सद्य एव अन्तः न प्रवेशयेत्, तर्हि त्वां रामसहितं सपुरं शापेन योजयामि इति भर्त्सितवान्। शापभयात् भ्रातृवचनमुल्लङ्घ्य अन्तः गतवान् लक्ष्मणः। रामस्य कोपपात्रमभूत् च। तदा भ्रातृवचनोल्लङ्घनं दोषायैव इत्यतः राजानं प्रार्थयामास, यतोऽहं वचनोल्लङ्घनमकार्षम्, अत एव मां त्यक्तुमर्हसि। येन भवत्कृतशपथः, "मध्ये प्रविष्टो वध्यः", इत्येवं रूपः पालितो भवेत् इति। तथा वदन् इदमपि ब्रवीति रामाय, "जहि मां सौम्य विस्रब्धः प्रतिज्ञां परिपालय। हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः" इति॥ एवमेव "यदि प्रीतिर्महाबाहो यद्यनुग्राह्यता मयि। जहि मां निर्विशङ्कः त्वं धर्मं वर्धय राघव॥ (वा.रा. उत्तरकाण्डम् 96-3)" इत्यपि प्रोवाच। ततः रामोऽपि मन्त्रिण आहूय लक्ष्मणविषये किं कर्तव्यमिति पप्रच्छ। तैः सह गुरुः वशिष्ठोऽपि प्राप्तः। वसिष्ठः प्रोवाच – "त्यजैनं बलवान् कालः मा प्रतिज्ञां वृथा कृथाः। विनष्टायां प्रतिज्ञायां धर्मोऽपि विलयं व्रजेत्। ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम्। सदेवर्षिगणं सर्वं विनश्येत न संशयः॥ (वा.रा. उत्तरकाण्डम् 106-9,10) इत्येवं बहुभिः वचनैः लक्ष्मणत्यागायैव श्रीरामं प्रचोदयामासुः सर्वेऽपि। ततो रामोऽपि लक्ष्मणं "'विसर्जये त्वां सौमित्रे मा

भूद्धर्मविपर्ययः। त्यागो वधो वा विहितः साधूनामुभयं मतम्" (वा.रा. उत्तरकाण्डम् 106-13) इति तं तत्याज। एवमेव मृगयावधविषयेऽपि धर्मातिक्रमः रामेण न कृतः। यतः महाभारते आदिपर्वणि वचनमिदं श्रूयते इत्थम्, "शत्रूणां या वधेवृत्तिः सा मृगाणां वधे स्मृता। राज्ञां मृग, न मां मोहात् त्वं विगर्हितुमर्हसि॥ अच्छद्मना मायया वा मृगाणां वध इष्यते। स एव धर्मो राज्ञां तु तद्वित्वं किन्नु गर्हसे" (महाभारतम्-आदिपर्व-123-19) इति॥ अतः मृगयायां जन्तुवधः क्षत्रियाणां सम्मत एव।

किञ्च अग्निसाक्षिकं कृतमित्रस्य सुग्रीवस्य शत्रुत्वात् तथैव स्वशत्रोः रावणस्य मित्रत्वादिति उभयतोऽपि वालिहनने रामः अधिकृत एव। तदस्ति गदापर्वणि श्रीकृष्णवचनम्, "आत्मवृद्धिर्मित्रवृद्धिः मित्रमित्रोदयस्तथा। विपरीतं द्विषस्त्वेतत् षड्विधा वृद्धिरात्मनः॥" (महाभारतम्-शल्यपर्व-61-15) इति। एवमेव द्रोणपर्वण्यपि भगवान् अर्जुनशत्रुहननेन अर्जुनसुहृदं मां सर्वे जानन्तु इत्याह। "अहं विजित्य तान् सर्वान् सहसा सहयद्विपान्। अर्जुनार्थे हनिष्यामि सकर्णान् ससुयोधनान्॥ श्वः सः देवास्सगन्धर्वाः पिशाचोरगराक्षसाः। ज्ञास्यन्ति लोकास्सर्वे मां सुहृदं सव्यसाचिनः॥ (महाभारतम्-द्रोणपर्व-79-31,32)" इति। वस्तुतः मित्रस्य शत्रुः स्वशत्रुरेव भवति। अत एव उद्योगपर्वणि भगवान् मित्रशत्रुः स्वशत्रुरेवेति स्पष्टं जगाद, "ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः। यस्तान् द्वेष्टि सः मां द्वेष्टि यस्ताननु समामनु॥" (महाभारतम्-उद्योगपर्व-91-28) इति। तस्मात् मित्रशत्रुत्वेनैव स्वशत्रुत्वमप्यापन्नस्य वालिनः वधः सर्वथा धर्मसम्मत एव इति श्रीकृष्णवचनात् ज्ञायते। एतस्मात् प्रबलतरो हेतुरपि वर्तते श्रीरामस्य वालिहनने। तथा च स्वकीयस्यापन्नस्य रक्षणाय अन्यायेनापि तच्छत्रोः वधः नैव दोषायेति विषये प्रमाणान्तरमपि विद्यते, तद्यथा द्रोणपर्वणि अर्जुनेन, अत्यन्तापन्नं स्वशिष्यं सात्यकिं हन्तुं प्रवृत्तस्य भूरिश्रवसः सखड्गे बाहौ छिन्ने, तेन च अन्यसङ्गतस्य मम बाहुच्छेदनं तव पापाधायकमिति भूरिश्रवसा दूषितः अर्जुनः स्वकीयस्य जनस्य आपत्समये रक्षणाय अन्यायेनापि शत्रुवधोऽवश्यं कर्तव्यः, अन्यथा पापं भविष्यति इति भूरिश्रवसं प्रत्युक्तवान् इति दृश्यते, तथा च "सङ्ग्रामाणां हि धर्मज्ञः सर्वशास्त्रार्थपारगः। न चाधर्ममहं कुर्यां जानंश्चैव हि मन्यसे"। "न चात्मा रक्षितव्यो वै राजन् रणगते नहि। यो यस्ययुज्यतेऽर्थेषु स वै रक्ष्यो नराधिप"। 'यद्यहं सात्यकिं पश्ये वध्यमानं महारणे। ततस्तस्य वियोगेन पापं मेऽनर्थदो भवेत्"। "यदीच्छसि शिरश्चास्य असिना हन्तुमाहवे॥" (महाभारतम्-द्रोणपर्व-143-9,20,21) । तथा (तदा) कृच्छ्रगतं चैव सात्यकिं कः क्षमिष्यते? इति। तथा च पूर्वोक्तैः सर्वैरपि हेतुभिः रामेण वाली छद्मनाऽपि अवश्यं हन्तव्य एव। न तत्र धर्मनाशःइति ज्ञायते। ननु एते सर्वेऽपि हेतवो ये उक्ताः ते रामेण स्वयं राजत्वेनैव कर्तुं

शक्याः। न तत्र सुग्रीवपुरस्कारः आवश्यकः इति चेत् न। भ्रात्रोः परस्परं कलहायमानयोः अन्यतरेण स्वसहायमानीतैः तद्वानि समये तत्प्रार्थितैरेव साहाय्यं कर्तव्यम् इति भीष्मपर्वणि धृतराष्ट्रं प्रति जनमेजयेन उच्यते –

महान्त्यनीकानि महासमुच्छ्रये समागमे पाण्डव-धार्तराष्ट्रयोः।

चकम्पिरे शङ्खमृदङ्गनिःस्वनैः प्रकम्पितानीव वनानि वायुना॥ (महाभारतम्-भीष्मपर्व-44-6)

भीमसेनो महाबाहुः प्रणदन् गोवृषो यथा। (महाभारतम्-भीष्मपर्व-44-8)

शङ्खदुन्दुभिनिर्घोषान् वारणानाञ्च बृंहितम्। सिंहनादं च सैन्यानां भीमसेनरवोऽभ्यभूत्॥
(महाभारतम्-भीष्मपर्व-44-9)

तमायन्तं महेष्वासं सोदर्याः पर्यवारयन्। छादयन्तः शरव्रातैः मेघा इव दिवाकरम्॥
(महाभारतम्-भीष्मपर्व-44-14)

दुर्योधनश्च पुत्रस्ते दुर्मुखो दुस्सहस्सहः। (महाभारतम्-भीष्मपर्व-44-15)

ततस्ते पार्थिवाः सर्वे प्रगृहीतशरासनाः। सहसैन्याः समापेतुः पुत्रस्य तव शासनात्॥
(महाभारतम्-भीष्मपर्व-44-26)

युधिष्ठिरेण चादिष्टः पार्थिवास्ते सहस्रशः। विनदन्तः समापेतुः पुत्रस्य तव वाहिनीम्॥

(महाभारतम्-भीष्मपर्व-44-27) इति। अनेन सुस्पष्टं ज्ञायते यत् ययोर्द्वयोर्मध्ये युद्धं चलति, तयोः आज्ञां आदेशं च विना तत्पक्षीयैः युद्धे प्रवेष्टुं न शक्यते इति। अत एव –

"वालिना भग्नदर्पः स सुग्रीवो मन्दविक्रमः। वालिनं प्रति सामर्षो दर्शयामास राघवम्॥

ततो रामो महातेजा मतिं दृष्ट्वा हरीश्वरम्॥ स शरं वीक्षते वीरो वालिनो वधकारणात्"॥

(वा.रा.कि.का -16-24,25) इति वचनैनैव सुग्रीवादिष्टो रामो वालिवधे प्रायतत इति ज्ञायते।

नन्वेवमपि सामान्यानां विषये छद्मनावधकरणे शत्रोः दोषाभावः कथञ्चिदपि अङ्गीकर्तुं शक्यः। परं "धार्मिकोऽस्मि" इति ब्रुवता रामेण तथा छद्मना वालिनो वधकरणेन दोषः कथं न स्यात्। स्यादेव दोषः, यतः मनुः वदत्येवं, "न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम्। न भीतं न पारवृत्तं न परेण च सङ्गतम्" इति। अत्र परेण सुग्रीवेण सङ्गतो वाली युद्धे। तादृशस्य वधकरणे धार्मिकस्य रामस्य प्रवृत्तिः कथं वा अङ्गीक्रियताम्? इति चेत् – अत्र गौतमवचनमपि, "न दोषो हिंसायामाहवे। अन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलं वृक्षारूढगोब्राह्मणवादिभ्यः। (गौ.ध.सू.2-10-

17,18)" इति रामकृतं वालिवधम् अन्याय्यमित्येव दर्शयति इति चेत्, न। आपद्धर्मदृशा रामकृते वालिवधे दोषाभावः शास्त्रानुगृहीतः। तथा च आपद्धर्मे, "सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम्। आपद्यापदिकाले च कुर्वीत न विचारयेत्॥ अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत्। कुर्यात्तृणमयं चापं शयीत मृगशायिकाम्॥ अग्न्याधानेन यज्ञेन काषायेन जटाजिनैः। लोकान् विश्वासयित्वा च ततो लुम्पेद्यथा वृकः॥ वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः। ततः पर्यागते काले भिन्द्याद्घटमिवाश्मनि॥ अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन्। कृपा तस्मिन्न कर्तव्या हन्यादेवापकारिणम्॥" (म.भा, आदिपर्व 153.20-24),इत्येवमादिभिः आपदि किमपि कर्तुं शक्यते इति ज्ञायते। रामोऽपि अधुना आपन्न एव। दारापहरेणेन सहायालाभेन शत्रुप्राबल्येन च प्राप्तापायत्वेन आपद्धर्ममनुसृत्य वालिवधः पराङ्मुखकृतः नैव दोषाय भवितुमर्हति।

वस्तुतस्तु मुख्यधर्मानुसारेणैव वालिहननम्। तथा हि – रामस्तावत् अग्निसाक्षिकं सुग्रीवेण सख्यं कृतवान्। सुग्रीवेण च, "अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः। ऋष्यमूकं गिरिवरं हतभार्यः सुदुःखितः॥ सोहं त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः। वालिना निकृतो भ्रात्रा कृतवैरश्च राघव। वालिनो मे भयार्तस्य सर्वलोकाभयङ्कर। ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि॥" (वा.रा.कि.का 8.16-18) इति दैन्येन वचनेन श्रीरामः सम्प्रार्थितः। दीनस्य सुग्रीवस्य रक्षणं राज्ञो रामस्य क्षत्रियस्य धर्मः। राज्ञां दीनजनरक्षणस्य परमधर्मत्वात्। तथा च कामन्दकः,

"वाक् सूनृतादयादानं दीनोपकृतरक्षणम्। इति सङ्गः सतां साधुहितं तत्पुरुषव्रतम्॥
आविष्ट इव दुःखेन तद्गतेन गरीयसा। समन्वितः करुणया परयादीनमुद्धरेत्॥
न तेभ्योऽभ्याधिकास्सन्ति सतस्सत्पुरुषव्रतम्। दुःखपङ्कार्णवे मग्नं दीनमभ्युद्धरन्ति ये॥
दयामास्थाय परमां धर्मादविचलन्नृपः। पीडितानामनाथानां कुर्यादश्रुप्रमार्जनम्॥
अनृशंस्यं परोधर्मः सर्वप्राणिभृतां व्रतम्। तस्माद्राजाऽऽनृशंस्येन पालयेत् कृपणं जनम्"॥

(महाभारतम् ,शल्यपर्व,1.) इति दीनरक्षणविषये राजव्यवहारलक्षणं स्पष्टं ब्रवीति। इदमेव कर्णपर्वण्यपि श्रीमन्महाभारते, "आपद्गतं कञ्चन यो विमोक्षेत् स बान्धवः स्नेहयुतः सुहृच्च। एवं पुराणे ऋषयो वदन्ति धर्मस्सदा सद्भिरनुष्ठितश्च"॥ (महाभारतम्,कर्णपर्व,73.31) इति दृश्यते। वस्तुतः सति सामर्थ्ये आर्तसंरक्षणाकरणे प्रत्यवायमाह गौतमः – "ब्राह्मणाभिशंसने दोषस्तावान्", "द्विरनेनसि", "दुर्बलहिंसायां चाविमोचने शक्तश्चेत्" इत्यादिवचनैः। एवमेव आदिपर्वण्यपि, "जानन्नपि च यः पापं शक्तिमान् न निय-

च्छति। ईशस्सन् सोऽपि तेनैव कर्मणा सम्प्रयुज्यते" इति दृश्यते। हरिवंशेऽपि ब्रह्मदत्तपूजनीय संवादे,

"ननु नूनं श्रुता तेऽभूदियमाङ्गीरसीश्रुतिः। शरणागतः क्षुधार्तश्च शत्रुभिश्चाप्युपद्रुतः॥

चिरोषितश्च स्वगृहे पातव्यः सर्वतोभयात्॥ अपालयन्नरो याति कुम्भीपाकमसंशयम्।

कथमस्य हविर्देवाः गृह्णन्ति पितरः स्वधाम्"॥ इति दृश्यते।

"अतस्तदा रामकृतं सुग्रीवसान्त्वनम् –

अद्यैव तं हनिष्यामि तव भार्यापहारिणम्। भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम्॥

शरैर्विनिहतं पश्य विशीर्णमिवपर्वतम्। यावत्तं न हि पश्यामि तव भार्यापहारिणम्॥

तावत्सजीवेत् पापात्मा वाली चारित्रदूषकः। आत्मानुमानात् पश्यामि मग्नं त्वां शोकसागरे।

त्वामहं तारयिष्यामि कामं प्राप्स्यासि पुष्कलम्"। इति श्रीरामः सुग्रीवाय प्रतिज्ञामकरोत्।

प्रतिज्ञार्थपालनमपि राजधर्म एव। रामस्य प्रतिज्ञापालनविषये बहूनि वाक्यानि वाल्मीकिद्वारैव बहुत्र दृश्यन्ते। तद्यथा आरण्यकाण्डे सीतां प्रति श्रीरामस्य, "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः" इति वचनं स्मरणीयमत्र। सुन्दरकाण्डेऽपि – "लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम्" इति दृश्यते। तथा च यस्य यदवश्यकर्तव्यं कर्तव्यत्वेन विहितं तदर्थतया प्रसक्तमपि प्रतिषिद्धाचरणं प्रत्यवायकरं न भवति। तद्यथा -

"समाप्तिं न समायाति प्रधानं यदसम्भवे। निषिद्धमपि तत्कार्यं तत्समाप्तिप्रयुक्तितः" इति सुरेश्वराचार्यवार्तिकमपि दर्शयति। एवञ्च इतरधर्मविरोधे जायमानेऽपि तदेव परिपालनीयम् इति ज्ञायते। एवमपि "अद्यैव तं हनिष्यामि" इति प्रतिज्ञापालनं तदा भवेत् यदा प्रच्छन्नतया हननमिति। प्रकाशतया युद्धायाहूतो वाली क्वचिद् भयान्नागच्छेत्, रुमां गृहीत्वा देशान्तरं वा धावेत्, रावणं वा समाश्रयेत्, शरणं वा समागच्छेत्, ससहायं सुग्रीवं दृष्ट्वा सकलवानरसेनया युद्धार्थं समागच्छेद्वा। तत्र प्रथमपक्षत्रये तद्धननस्य चिरकालसाध्यत्वेन अद्यैव तं हनिष्यमि, रुमां राज्यञ्च ते दास्यामि इति पूर्वप्रतिज्ञाकालनिपातः स्यात्। प्रतिज्ञाकालातिपाते च दोषः श्रूयते महाप्रस्थानिके,

"एकाह्ना निर्वहेयं वै शत्रूनित्यर्जुनोऽब्रवीत्। न चैतत् कृतवानेषु शूरमानी ततोऽपतत्॥" इति।

शरणागमनपक्षे च सः हन्येत, न वा। तं हन्तुं न शक्नोति रामः, शास्त्रनिषिद्धत्वात्। तदुच्यते तैत्तिरीये – "वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति" तै.कृ.य.सं. ६.५.८ इति। एवमेव आनुशासनिकपर्वण्यपि –

"भवेत्स गुरुतल्पी च ब्रह्महा च स वै भवेत्। सुरापानं च कुर्याच्च यो हन्यात् शरणागतम्"॥

"सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥" इति रामकृतानि प्रतिज्ञावचनानि स्मरणीयान्यत्र। तथा च शरणागतस्य वधः इत्येतत् श्रीरामे नैव घटते। सीतायां दुश्चरितवतः जयन्तस्यापि शरणागतस्य विषये सः स्वधर्ममेव पालितवान्। एवञ्च "अद्यैव तं हनिष्यामि" इति कृतप्रतिज्ञायाः विरोधः अवश्यमेव अभविष्यत्। एवमेव सेनया सहितः वाली यद्यागमिष्यत्, तदा दुष्टवालिहननेन सह तत्सहायानां सर्वेषामपि वानराणां वधः अभविष्यत्। तर्हि "वन्यानामहमपि राजराण्मृगाणाम्" इत्यनेन मृगराजत्वेन भरतं प्रति कृतप्रतिज्ञस्य रामस्य स्वप्रजा एव वानरा स्वेनैव हताः इति अपवादोऽपि समजनिष्यत्। तस्य सर्वथा तेन अधर्म्यमेव अभविष्यत्। राजानस्तु स्वशरीररक्षणापेक्षया प्रजासंरक्षणमेव खलु अवश्यं कुर्युः?

"क्षतात् खलु त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः।

राज्येन किं तद्विपरीतकृतेः प्राणैरुपक्रोशमलीमसैर्वा" इति रघुवंशस्य द्वितीयसर्गवचनमपि अत्र स्मर्तव्यमस्माभिः। तत्र मनुवचनमदिम् – "नरेन्द्राः त्रिदिवं यान्ति प्रजापालनतत्पराः इति। प्रजापालने एव तेषां राज्ञां सद्गतिः भवेदिति सम्यक् निरूपयति। प्रजापालने ये ये अवरोधाः भवेयुः तत्र राजानः न प्रवेक्ष्यन्ति। अत एव प्रजोपरोधशङ्कया एव भरतवाक्यं श्रुत्वा श्रीरामः स्वाभीष्टं कर्तव्यं राजसूययागमपि परितत्याजेति श्रीमद्वाल्मीकि रामायणात् एव ज्ञायते। तथा च भरतस्य –

"स त्वमेवं विधं यज्ञमाहर्तासि कथं नृप। पृथिव्यां राजवंश्यानां विनाशो यत्र दृश्यते॥
पृथिव्यां च ये पुरुषाः राजन् पौरुषमागताः। सर्वेषां भविता तत्र क्षयः सर्वान्तको यतः॥
एवं पुरुषशार्दूल गुणैरमितविक्रमः॥ पृथिवीं नार्हसे हन्तुं वशे हि तव वर्तते"॥ इति वचनं श्रुत्वा श्रीरामस्य वचनं यत्, "प्रीतोऽस्मि परितुष्टोऽस्मि तवाद्य वचनेन हि। इदं वचनमक्लीबं त्वया धर्मसमाहितम्॥
व्याहृतं पुरुषव्याघ्र पृथिव्याः परिपालनम्॥ एष तस्मादभिप्रायात् राजसूयात् क्रतूत्तमात्।
निवर्तयामि महाबाहो तव सुव्याहृतेन वै"॥ इति श्लोकाः तत्र प्रमाणपदमारुहन्ति।

एवमेव सकलराक्षसहनने प्रवृत्तं लक्ष्मणं प्रति रामवचनं, "नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि" इति वचनं, समस्तवानरवधे श्रीरामः न प्रावेक्ष्यत् इत्येव निरूपयति। ननु यावता प्रमाणैः वालिवधस्य न्याय्यत्वे प्रदर्शितेऽपि, तेन जाता अपख्यातिः कथं वा वार्यताम्? प्राप्ता अपकीर्तिः शल्यवत् इहपरलोकनाशिनी खलु इति चेत्, तत्रोच्यते, गर्हितकर्मप्रवृत्त्या प्राप्ता या अपकीर्तिः सा एव निन्द्या, परिहार्या च। प्रतिज्ञातार्थनिर्वहणे क्रियमाणे प्रसक्तापकीर्तेः प्रत्यवायकरत्वाभावात्। तदुच्यते – अपकीर्तिः

द्विविधा, कामक्रोधादिभिः प्रयुक्ता एका, धर्मरक्षणार्थतया प्रयुक्ताऽपरा। तत्र धर्मपुत्रेण "अश्वत्थामा हतः कुञ्जरः" इति राज्यलोभात् कृतेन असत्येन प्राप्ता अपकीर्तिः तं स्वरथसहितं भूमौ अपातयत् स्वर्गारोहणप्रकरणे महाभारते। युधिष्ठिरं प्रापयच्च नरकम्। तत्र प्रमाणमिदं पद्यम् –

"व्याजेन हि त्वया द्रोणः उपचीर्णः सुतं प्रति। व्याजेनैव ततो राजन् दर्शितो नरकस्तव"॥ इति।

धर्मार्थं प्राप्ता अपकीर्तिः प्रत्यवायकरी न भवति इत्यपि अन्यत्र दुर्योधनस्य ऊरुभङ्गप्रसङ्गे युद्धधर्मविरुद्धतया सुयोधने भीमेन हतेऽपि प्रतिज्ञापालनरूपधर्मस्य अनुष्ठितत्वात् प्रत्यवायाभावः तत्रैव भारते ज्ञायते। तत्र प्रमाणमिदम् –

"आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः। अतो दोषं न पश्यामि माक्रुधस्त्वं प्रलम्बहन्॥" इति।

एवं बहुभिः उपायैः रामेण कृतः वालिवधः न्याय्य एव इति धर्ममीमांसां तत्सन्दर्भस्थां यथामति यथादृष्टि विचार्य विरमति जनोऽयम् इति शम्॥

**********

हृदाकाशे चिदादित्यः सदा भाति निरन्तरम्।
उदयास्तमयौ न स्तः कथं संध्यामुपास्महे॥

-- काक्करशेरि भट्टतिरिः

**********

# सीतायाः सन्ध्यावन्दनानुष्ठानविचारः

**डा.शङ्करनारायणः**

श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वमहाविद्यालयः

एनात्तूर्, काञ्चीपुरम्

विदितमेवेदं विदुषां यद्रमणीयगुणाभिरामश्रीरामकथामृतनिष्यन्दः वल्मीकभवादिभिः कविकोकिलैः आस्वादितो वरीवर्तीति। अयञ्चेतिहासः धर्मस्वरूप इति निश्चप्रचम्। तदुक्तम् –

**वेदवेद्ये परे पुंसि जाते दशरथात्मजे।**
**वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना॥** इति।

अतः वेदस्वरूपमिदमितिहासरत्नं सर्वाङ्गीणतया धर्मस्यैवादर्श इति सिद्ध्यति। तादृशे धर्मादर्शे सर्वोऽपि विषयः धार्मिकैरनुसन्धेयो विभाति। श्रीमद्रामायणस्य सुन्दरकाण्डे अयं श्लोकः धार्मिकैर्विवेचनीयो भवति।

**सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी।**
**नदीं चैनां शिवजलां सन्ध्यार्थे वरवर्णिनी॥**

अयञ्च श्लोकः सीतान्वेषणतत्परस्य श्रीहनुमतो वाक्यम्। सीतामन्विष्यन् कपिराजः तरुमधिष्ठाय शिवजलां नदीं पश्यन् सन्ध्यार्थे सा वरवर्णिनी श्यामा अवश्यं समागमिष्यतीति कथयति।

अत्र च सीता सन्ध्यावन्दनानुष्ठानार्थं शिवजलां नदीमागमिष्यतीत्यत्र स्त्रीणां सन्ध्यावन्दन-विषये प्रश्नमुत्थापयन् धर्माकूतकारः एवं व्याख्याति--

"नन्वत्र सीता सन्ध्योपासनाय आगमिष्यतीत्युक्तम्, तदसङ्गतम्। सन्ध्या तावदर्घ्यप्रदानगायत्री-जपादित्योपस्थानात्मिका। गायत्र्यादिसन्ध्यामन्त्राश्च अधीता एव कर्मणि विनियोक्तव्याः। अध्ययनं च उपनीतेन माणवकेन गुरुकुलवासभिक्षाचरणादिनियमपूर्वकमेव कर्तव्यम्। उपनयनादिकं च 'अष्टवर्षं ब्राह्मणमुपनयीत' (शतपथब्राह्मणम्), 'वसन्ते ब्राह्मणमुपनयीत' (बोधायनीयगृह्यम्) इत्यादिशास्त्रात् पुंसामेव अवगम्यते। सन्ध्योपासनादिकमपि, **"सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च"** (बो.गृ.)

अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम्।

सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः॥ (बो.ध.)

इत्यादिसन्ध्योपासानादिविधिषु,

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।

आचारमग्निकार्यं च सन्ध्योपासनमेव च॥ (याज्ञवल्क्यस्मृतिः 1.2.15)

इत्याचार्यकर्तृकशिक्षणविधिषु (च) पुंलिङ्गनिर्देशेन पुंसामेवावगम्यते, न तु स्त्रीणाम्। किं च "न स्त्रीशूद्रौ वेदमधीयाताम्" इति स्त्रीणामध्ययनं साक्षादेव प्रतिषिद्धम्। एवं च उपनयनाध्ययनसंध्योपासनरहितानां स्त्रीणाम् अधिकाराभावेन सीताया कथं सन्ध्योपासनमुक्तमिति चेत् - न।

पूर्वोदाहृतोपनयनसन्ध्योपासनमन्त्राध्ययनविधिभिः पुल्लिङ्गनिर्देशेन स्त्रीणां प्राप्त्यभावेऽपि युगभेदेन सन्ध्योपासनप्रापकप्रमाणान्तरेण सन्ध्योपासनादेः प्राप्तिसम्भवाच्च। तथा च यमः -

"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं तथा॥

पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः। स्वगृहे चैव कन्यायाः भैक्षचर्यं विधीयते।

वर्जयेदजिनां चीरं जटाधारणमेव च॥"

इति न केवलं स्त्रीणामध्ययनम्, अपि तर्हि, अपूर्वमन्त्रद्रष्टृत्वरूपम् ऋषित्वमपि।

(तच्च) शाकलसंहितानुक्रमणिकापरिभाषायाम् - "अथर्षयः शतर्चिन आद्ये मण्डले" इत्यधिकृत्य,

"गोधा घोषा विश्ववारा अपालोपनिषन्निषत्। ब्रह्मजाया जुहुर्नाम अगस्त्यस्य स्वसादितिः।

इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी। लोपमुद्रा च नद्यश्च यमी नारी च शाश्वती।

श्रीर्लाक्षा सर्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा। रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः॥"

इति गोधाघोषादीनां ब्रह्मवादिनीनां ऋषित्वेन परिगणनात्। ऋषित्वं च मन्त्रोच्चारयितृत्वमेवेति तत्रैव प्रतिपादितम् - "यस्य वाक्यं स ऋषिः। या तेनोच्यते सा देवता" इति। उदाहृतं च - "अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्सङ्ख्या ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः" इत्युपक्रम्य "सत्येन सप्तचत्वारिंशत् सावित्री सूर्यात्मदैवतम् आनुष्टुभम्। पञ्चभिः सोममस्तौत्पराभिः स्वविवाहं सप्तदश्या देवान्परया सोमार्कौ परया चन्द्रमसं परया नृणां विवाहं मन्त्रा आशीःप्राया उदीर्ष्वेति द्वाभ्यां देवगन्धर्वविश्वावसून् तुष्टाव" इत्यादि। अत्र सत्येनेति सूक्तप्रतीकम्। सप्तचत्वारिंशदिति ऋक्सङ्ख्या।

सावित्रीति ऋषिः। सूर्यात्मदैवतमिति देवता। आनुष्टुभमिति छन्दः। तत्र च ऋषिः सावित्री पञ्चभिः सोमं पराभिः ऋग्भिः स्वविवाहम् इति अपूर्वतया स्वदृष्टैर्मन्त्रैः विभज्य सोमादीनां स्तुतिं कृतवतीति प्रतिपादनादपूर्वमन्त्र-दृष्टृत्वरूपं ऋषित्वमुक्तम्। न चैतत्स्त्रीणां मन्त्रानधिकारे सूर्यासावित्र्योर्युज्यते।

तथा छन्दोगानामार्षेब्राह्मणेऽपि - "इन्द्राण्याः साम इन्द्राण्याश्चैव साम" इति स्त्रिया इन्द्राण्या ऋषित्वं प्रतिपादितम्। अत एव स्त्रीणां ब्रह्मवादिनीनां ब्रह्मविद्याग्रहणोपदेशसंवादादिकं बृहदारण्यके अवगम्यते- "अथ ह गार्गी वाचक्नवी पप्रच्छ" इत्यादौ। न चैवं सति पूर्वोदाहृतोपनयनाध्ययनादि-प्रतिषेधपर्यवसायि वचनानां का गतिरिति वाच्यम्। तेषां वचनानां सद्योवधूविषयत्वात्। तथा हि -

स्त्रियो द्विविधाः - ब्रह्मवादिन्यः, सद्योवध्वश्चेति। तत्र ब्रह्मवादिनीनामुपनयनवेदाध्ययना-दिकमस्त्येव। सद्योवधूनां तु अध्ययनाद्यभावः। तथा च हारीतः -

"द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्चेति। तत्र ब्रह्मवादिनीनाम् उपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्येति। सद्योवधूनामुपनते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः", इति।

एतदभिप्रायेणैव याज्ञवल्क्यस्य भार्याद्वैविध्यमुक्तं बृहदारण्यके –

"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च। तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव। स्त्रीप्रज्ञैव तर्हि कात्यायनी।" इति॥

सद्योवधूनामपि अध्ययननिषेधः न सर्वमन्त्राध्ययनविषयः। किं तु कर्मानुपयुक्तमन्त्राध्ययन-विषयः। अन्यथा "अथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयमिति निनीय मुखं विसृज्योत्तिष्ठति। पुष्टिमती, पशुमती, प्रजावती गृहमेधिनी भूयासमिति उदकमुदुक्षन्ती वाचयति" (बो.श्रौ.) इत्यादिविधिबाधापत्तेः। अत एव तालवृन्तनिवासिना कर्मोपयुक्तमन्त्राध्ययनमुक्तम् - प्रागग्न्याधेयात् कर्माङ्गमन्त्राध्ययनम् इति।

एतदप्यध्ययनमुपनयनसापेक्षमिति कृत्वैव उपनयनस्थानापन्नो विवाह इत्युक्तं मनुना-

" वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः"। इति।

हारीतस्त्वाह – सद्योवधूनामुपनते विवाहे कथंचिद् उपनयनमात्रं कृत्वा विवाहः कार्यः इति। अत्र कथंचिदित्यनेन विवाहप्राक्कालीनमुपनयनममन्त्रकमित्यवगम्यते।

विवाहप्राक्कालीनसंस्काराणाममन्त्रकत्वं मनुराह –

"अमन्त्रका तु कार्येयं स्त्रीणामावृदशेषतः। संस्कारार्थं शरीरस्ययथाकालं यथाक्रमम्॥

**वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः। पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया॥**

इति। तथा च सद्योवधूनां स्वकर्तव्यकर्माङ्गमन्त्राध्ययनमस्त्येव॥

अत्र चैवं व्यवस्था - कलियुगे सद्योवध्व एव। इतरयुगत्रये सद्योवध्वो ब्रह्मवादिन्यश्च, पुराकल्पेषु इति यमवचनात्। तथा च त्रेतायुगवर्तिन्याः सीतायाः सन्ध्योपासनाद्यधिकारः सम्भवतीति महर्षिणा वाल्मीकिना प्रतिपादितं सन्ध्योपासनादिकं युक्तमेवेति॥

एवं धर्माकूतकर्त्रा सीतासन्ध्यावन्दनोल्लेखस्य समर्थनं कृतम्। संस्कारप्रकाशकारोऽपि मनोर्वचनस्य -

**अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।**
**संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥**

इति वाक्यस्य व्याख्यानावसरे - अत्र इयमिति सर्वनाम्ना बुद्धिस्थपरामर्शात् सप्तानां च संस्काराणां बुद्धिस्थतया उपनयनस्यापि तदन्तर्गतत्वेनातिदेशतः स्त्रीणामप्यमन्त्रकमुपनयनं सिद्ध्यति। ये तु चूडान्तानामेवेदमा परामर्शः, नोपनयनकेशान्तयोरिति मन्यन्ते, तेषामसम्बन्धव्यवधानेन विच्छिन्नबुद्धीनां परामर्शो वदतां कथमिव लज्जा नाननमानमयति। इत्युत्तरं ददाति।

पुनश्च आश्वलायनगृह्योल्लेखं मुखमग्रे ब्राह्मणोनुलिम्पेत। इति समावर्तनीयमनुलेपनं प्रस्तुत्य उपस्थं स्त्री इत्यनेन स्त्रीणामनुलेपनं विदधता स्त्रीणामुपनयनमुररीकृतमिति।

एवञ्च तस्योपसंहारः इत्थम् – ब्रह्मवादिनीनां गर्भाष्टमादौ मन्त्रवत् तूष्णीम् चोपनयनम्। ततो वेदाध्ययनम्, प्रागेव रजोदर्शनात् विवाहश्चेति। सद्योवधूनां तु उक्तविवाहकाले एवोपनयनम्। सद्य एव समावर्तनम्। सद्य एव विवाह इति।

सर्वकालेषु स्त्रीणां प्रातः अर्घ्यप्रदानन्तु विहितं स्मृतिष्विति दृश्यते।

**प्रातः काले तु या नारी दद्यादर्घ्यं विवस्वते।**
**सप्त जन्मनि वैधव्यं सा नारी नैव पश्यति॥** इति।

एवं यज्ञोपवीतधारणं मन्दिरेषु दुर्गाया अपि दृश्यते। पुल्लमङ्गै इति स्थले विराजमानायाः दुर्गायाः प्रतिमायां यज्ञोपवीतदर्शनमस्य प्रमाणभूतम्।

कल्पोक्तपूजास्वपि सरस्वत्यादिस्त्रीदेवतानां यज्ञोपवीतधारणं प्रत्यक्षतो अवलोक्यते, अनुष्ठीयते च। अतः पूर्वकल्पेषु द्वैविध्यं नारीणाम्। तत्र ब्रह्मवादिनीनामुपनयनम्, सन्ध्यावन्दनादि-अनुष्ठानमभवदिति सीता तत्रान्तर्भवतीति च वाल्मीकिरामायणबलात्सिद्ध्यति।

******

# सुन्दरकाण्डात् अवगम्यमानाः धर्माः नीतयश्च ।

V. RAMAKRISHNAN

Asst. Prof. The Madras Sanskrit college

Dept of Advaita Vedanta

रामायणस्य सम्पूर्णस्य अयमेकः नीतिविषयः सारतमः एकेन श्लोकेन प्रतिपाद्यते इति तु सुप्रसिद्धम्।

श्रूयतां श्लोकरत्नमिदम् –

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।

अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति" ॥

एवं रामायणात् अवगम्यमानं सामान्यधर्ममुक्त्वा सुन्दरकाण्डे द्वितीयभागे अवगम्यमानान् कांश्चित् धर्मान् निर्दिदिक्षामि ॥

(१) मनुष्यस्य दुःखकाले प्रियवार्त्ता सुखावहा भवति ।

अयं विषयः मेघसन्देशादिकाव्येषु नितरां प्रसिद्धः। अत एवे "मेघसन्देशे" इदमुक्तम् --:

"आशाबन्धः कुसुमसदृशं प्रायशोह्यङ्गनानां ।

सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि" ॥ इति ।

सेयं सामान्या नीतिः रीतिश्च अत्युत्तमेन दूतेन हनुमता बहुविध चिन्तानन्तरं एवं निर्णीतम् ।

तथाहि इमे श्लोकाः रसनीयाः अस्माभिः । "इति सञ्चिन्त्य हनुमान् चकार मतिमान् मतिम् । राममक्लिष्ट कर्माणं स्वबन्धुमनुकीर्तयन् ।" ॥ इति ।

शुभानि धर्मयुक्तानि वचनानि समर्पयन् ।

श्रावयिष्यामि तां सीतां मधुरां प्रब्रुन् गिरम् ॥

(२) पतिकुलवास एव स्त्रीणां श्रेयस्करः ।

स्त्रीणां पतिकुलस्य श्रैष्ठ्यमेव सर्वदा मनसि सुदृढं विपरिवर्तते । सोऽयं पतिव्रतास्वभावश्च भवति । अनुत्तमायाः पतिव्रतायाः सीतायाः हनुमत्प्रश्नस्य उत्तरदानावसरे श्वशुरस्य

भर्तुः च महिमा पतिकुले स्वेन अनुभूतं निरतिशयं सौख्यं च वर्ण्यते । अहो ! वाल्मीकेः पतिव्रता स्वभावस्य व्यञ्जतया कथनम् । तथाहि इमे श्लोकाः प्रवृत्ताः -:

" सा तस्य वचनं श्रुत्वा रामकीर्तन हर्षिता । उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् ॥

पृथिव्यां राजासिंहानां मुख्यस्य विदितात्मनः । स्नुषा दशरथस्याहं शत्रुसैन्यप्रमाथिनः ॥

सीता च नाम नाम्नाऽहं भार्या रामस्य धीमतः । समा द्वादश तत्राहं राघवस्य निवेशने" ॥

भुञ्जाना अमानुषान् भोगान् सर्वकामसमृद्धिनी ।

(३) एकदारव्रतत्वं रामस्य

भर्तुः अपि स्त्रीविषये एकदारव्रतत्वं कान्ताविरहासहिष्णुत्वं च आवश्यकमेव इति अयं नीतिविषयः वाल्मीकिना सीताविरहिणो रामस्य अवस्थितिप्रदर्शनेन सूच्यते । हनुमद्वचनानि अत्र करतलामलकायमानानि शोभन्ते ॥

"तवादर्शनजे नार्ये शोकेन संपरिप्लुतः । न शर्म लभते रामः सिंहार्दित इव द्विपः" ॥

न मांसं राघवो भुङ्क्ते न चापि मधु सेवते । नैव दंशान् न मशकान् न कीटान् न सरीसृपान् ॥

राघवोपनयेद्गात्रात्वद्गतेनान्तरात्मना।

अनिद्रः सततं राम सुप्तोऽपि च नरोत्तमः । सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते॥

(४) पुण्यपापफलमनुभोक्तव्यम् इत्ययं धर्मः

सर्वैरपि स्वकृतानि पुण्यपापानि अवश्यमनुभोक्तव्यानि । वत्सो गोसमूहे स्वमातरमिव धेनुमिव बहुजन्मान्तरितमपि पापं कर्म अनुरूपं दुःखं नूनं प्रयच्छति । धर्माऽधर्मयोः अयं फलप्रदः स्वभावः सर्वेषां जन्मनि आपतति । एतादृशः कर्मशास्त्रसिद्धान्तः सीताद्वारा वाल्मीकिना प्रदर्श्यते । तथाहि वचनानि श्रूयन्ताम् -:

"अमृतं विषसंसृष्टं त्वया वानरभाषितम् । यच्च नान्यमना रामः यच्च शोकपरायणः ॥

ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे । रज्ज्वेव पुरुषं बध्वा कृतान्तः परिकर्षति ॥

विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम । सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥"

यद्यपि सीतारामयोः कर्मान्तरीयफलानुभवो नास्ति सामान्योऽयं धर्मः आत्मविषये आरोप्य उच्यते ।

**५) परदारावमर्शः पापेषु सुमहत्तमः**

सर्वैरपि जनैः परदारेषु मातृवद्वर्त्तितव्यमिति हि रीतिः। यथा स्वभार्या तथैव अन्येषामापि दाराः पातिव्रत्येन संरक्ष्याः । बहुभिः पुण्यैः सञ्चिता कीर्तिः तपसां च फलं समूलघातं हन्ति परदारावमर्शनम् । सर्वोत्कृष्टोऽयं नीतिविषयः हनुमता रावणं प्रति उपदिश्यते । तथाहि -

"तद्भवान् दृष्टधर्मार्थः तपः कृतपरिग्रहः । परदारान् महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥

नहि धर्मविरुद्धेषु बह्वपायेषु कर्मसु । मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥

रक्षितेयं मया सीता तथा शोकपरायणा । नेयं जरयितुं शक्या स्वासुरैरमरैरपि ॥

विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा इति ॥

एवम् आदिकव्ये श्रीमद्रामायणे पदे पदे धर्मनीतिविषयाः समुपलभ्यन्ते । अत एव -: "वेदः प्राचेदसादासीत् साक्षाद्रामायणात्मना " इति सूक्तिः जेजीयते" इदम् आदिकव्यात्मकं श्रीमद्रामायणमधीत्य अत्रोक्तोन् धर्मान् नीतिविषयाञ्च सम्यक् आलोड्य ये अनुवर्तन्ते ते उत्तमां गतिमाप्नुवन्ति । उक्तं च मनुस्मृतौ -:

"दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः। धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।

धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ दशलक्षणानि धर्मस्य ये जनाः समधीयते ।

अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम्। इति।

आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना । यस्तर्केणाऽनु संधत्ते स धर्मं वेद नेतरः॥

उक्तम् खलु श्रीकृष्णेन--

"तस्माच्छास्त्रं प्रमाणन्ते कार्याऽकार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्मकर्तुमिहार्हसि॥ इति ।

*****

# वाल्मीकिरामायणे सुन्दरकाण्डे हनुमतः दूतधर्मविचारः
# – एका समीक्षा

Dr. HIRALAL DASH
Asst. Prof. of Sahitya ,
Dept. of Sanskrit & Indian Culture
SCSVMV University,
Enathur, Kanchipuram;
Tamilnadu

संस्कृतवाङ्मयेऽस्मिन् वैदिकलौकिकरूपेण संस्कृतस्य द्विधा वर्गीकरणं दृश्यते। तत्र लौकिकसंस्कृतेन यानि यानि महापुराणानि विरचितानि सन्ति तेषु रामायणं महाभारतञ्च अस्माकं सर्वेत्कृष्टं महापुराणद्वयमिति विषयः सर्वजनविदितोऽस्ति। भारतीयदर्शनस्य कलायाः, आदर्शनारीणां, आदर्शपुरुषाणां, आदर्शभ्रातॄणां, आदर्शभृत्यानां, अर्थनीतीनां, राजनीतीनां च स्वरूपं यथा रामायणे द्रष्टुं शक्यते न तथाऽन्यत्र महाकाव्येषु। महाकाव्यमिदं रामायणं विशिष्टेनोदात्तत्वेन, भाषायाः माधुर्यौजप्रसादगुणसमन्वितत्वेन, रचनाशैल्याः पराञ्जलतया, भावानां मनोहारिण्या विवृत्या, सर्वेषां रसानां यथास्थानम् उपन्यासात् , भारतीयायाः संस्कृतेर्विशदं विवरणात् , नीतिशिक्षायाः संग्रहेण, अर्थगौरवेण, अलङ्काराणां छन्दसां च सुनियोजनेन विशिष्टं स्थानं वरीवर्त्ति। ग्रन्थरत्नमिदं वाल्मीकिमुनेः शोकात् साक्षादागतम्। व्याधेन मारितस्य पुरुषक्रौञ्चस्य दृश्यं दृष्ट्वा वाल्मीकेः मनसि यद् दुःखं तदेव श्लोकरूपेण समागतम्। तथाहि –

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ [1]

रामायणस्य लोकप्रियता अधिकरूपेणासीत् । रामायणतुल्यं महाकाव्यं तत्र चित्रित- पात्राणां वा स्वरूपं नान्यत्र कुत्रापि काव्येषु द्रष्टुं शक्यते। यावत्पर्यन्तं गिरयः महीतले स्थास्यन्ति तावत् रामायणस्य कथा लोकेषु प्रचरिष्यति। उक्तं यथा रामायणे बालकाण्डे –

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।

तावत् रामायणकथा, लोकेषु प्रचरिष्यति ॥ [2]

## शोधपत्रस्यास्य उद्देश्यम्

रामायणे सप्तकाण्डेषु यद्यपि बालकाण्डात् अयोध्याकाण्डं यावत् धर्मस्य स्वरूपं प्राचुर्येण परिलक्ष्यते तथापि सर्वेषां पात्राणां राम-सीता-विभीषण-हनुमत्-सुग्रीवादीनां धर्मस्य निर्वचनं भिन्नं भिन्नं भवति। दूतस्य भावः दौत्यम्। रामायणे हनुमान् आदर्शदूतरूपेण भक्तरूपेण च कार्यं कृतवान्। हनुमन्तं विना कदापि किमपि कार्यं साधयितुं नैव शक्यते स्म रामायणे। सञ्जीवनीमानेतुं स्वयं हनुमान् अगमत्। सः स्वयं पर्वतमानयति स्म, येन सञ्जीवनीद्वारा लक्ष्मणं जीवयति। एवञ्च सीतायाः अन्वेषणे समुद्रलंघनं कृत्वा हनुमता यः दूतधर्मः आचरितः सः समाजस्य कृते विशिष्टः आदर्शमार्ग इति वक्तुं शक्यते। एकस्य समुचितदूतस्य यत्कर्म तत्सर्वमपि हनुमता परिपालितः। रामायणे सुन्दरकाण्डे हनुमता दूतस्य यः धर्मः तत्सर्वमपि वाल्मीकिः रामायणे सुन्दरकाण्डे वर्णयामास। तदर्थं शोधपत्रेऽस्मिन् हनुमतः दूतधर्मस्य विषये विचारः कर्तुं कश्चन प्रयासः विहितः।

## धर्मशब्दस्य व्युत्पत्तिः अर्थश्च

धृञ् (धारणे) इत्यस्मात् धातोः "अर्त्ति –स्तु – सु – हु – सृ – धृ – क्षि – क्षु – भा – या – वा – पदि – यक्षि– नीभ्यो मन्" [3] इति उणादिसूत्रेण मन् प्रत्यये धर्मशब्दोऽयं समजनि। धर्मशब्दस्यार्थः धर्मशास्त्रे निरूपितो वर्तते। तत्र मनुस्मृतौ द्वितीयाध्याये धर्मस्य लक्षणं निरूपयितुमुक्तम् –

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ [4]

## रामायणे हनुमतः आदर्शदूतस्य स्वरूपम्

सम्पूर्णे रामायणे अस्माभिः द्रष्टुं शक्यते यत् हनुमन्तं विना रामस्य अस्तित्वमेव नैव सम्भवति स्म। यदा श्रीरामेण सह हनुमतः सम्बन्धः जातः ततः प्रभृतिः रामं प्रति हनुमतः दायित्वं सर्वोपरि जातम्। रामः प्रतिपदं, प्रतिक्षणं, हनुमतः साहाय्यमिच्छति स्म। यदि विचारयामस्तर्हि हनुमतः अभावे रामः निश्वासोऽपि नेतुं न शक्नोति स्म। रामायणे एतत् सर्वमपि वाल्मीकिना सोदाहरणपुरस्सरं सुस्पष्टीकृतम्। वाल्मीकिरामयणे हनुमान् आदर्शभक्तरूपेण, आदर्शदूतरूपेण, आदर्शमार्गदर्शकरूपेण निरूपितः वाल्मीकिना। रामायणे हनुमान् स्वस्य दूतकर्मणः औचित्यं जानाति स्म। किं क्रियते चेत् मम प्रभुः सदा

तृप्तो भविष्यतीति विषयं हनुमान् जानाति, तदर्थं आदर्शदूतस्य स्वरूपं रामायणे सुन्दरकाण्डे निरूपितं वाल्मीकिना। तथाहि—

**अर्थानर्थान्तरे बुद्धिः निश्चितापि न शोभते। घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥** [5]

श्लोकेऽस्मिन् एकस्य आदर्शदूतस्य स्वरूपं परिलक्ष्यते। राजानः मन्त्रिणश्च सदा स्थिरबुद्ध्या चिन्तयन्ति यत् कदापि कर्तव्याकर्तव्यविचारविषये कोपि अविवेकदूतस्याश्रयेण नैव सफलीभवति। आत्मानं पण्डितमिति विचिन्त्य अविवेकी दूतः सदा कार्यं नाशयति। हनुमान् तदर्थं दूतधर्मस्य विचारं स्वमनसि निधाय भगवतः श्रीरामस्य आशीर्वादेन अग्रे सरति।

**रामायणे सुन्दरकाण्डे हनुमतः दूतधर्मस्य विचारः**

श्रीमद्वाल्मीकिरामायणे हनुमान् दूतधर्मपरिपालकस्य आदर्शपात्ररूपेण चित्रितः वाल्मीकिना। सः बहुधा कष्टं विधाय समुद्रलङ्घनं कृत्वा सीतायाः अन्वेषणं कृतवान्। सुन्दरकाण्डे प्रथमसर्गे आदौ हनुमतः दूतधर्मस्य प्रथमं स्वरूपं दरीदृश्यते यत् सः शतं योजनं यावत् समुद्रमतिक्रम्य लङ्कां प्रति आगतवान्। समुद्रस्य अतिक्रमणं नैव साधारणकर्म। हनुमान् स्वयं जानाति एतत्कर्म नैव सरलेन कर्तुं शक्यते। तथापि श्रीरामचन्द्रस्य अन्येषां वानराणां च मुखं दृष्ट्वा सः दुष्प्रापमपि कर्म धर्मञ्च कर्तुं सिद्धोऽभवत्। उक्तं यथा सुन्दरकाण्डे-

**रामार्थं वानरार्थं च चिकीर्षन् कर्म दुष्करम्। समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥** [6]

हनुमतः समुचितदौत्यकर्मणः लक्षणं सुन्दरकाण्डे वर्णितं महर्षिणा वाल्मीकिना। एकस्य समीचीनदूतस्य चिन्तनं द्रष्टव्यं सहृदयैः यत् हनुमान् चिन्तयति अहं बहुधा श्रमं कृत्वा लङ्कापुरीं प्रति अवश्यं गमिष्यामि। परन्तु तत्र यदि सीतायाः दर्शनं न भवति तदानीं अहं स्वर्गलोके प्रविशामि। एवं रूपेण श्रमं विधाय यदि तथापि मातुः सी ायाः स्वर्गेऽपि दर्शनं न भवति तर्हि राक्षसराजरावणबन्धनं कृत्वा अहमत्र किष्किन्धाम् आनयामि। तत्र लङ्कायां कर्मद्वयं विधास्यामि। लङ्कायां कृत्यकृत्यस्सन् सीतया सह अत्र प्रत्यावर्तनं विधास्यामि। हनुमतः दूतकर्मणः एतदेव समीचीनमुदाहरणं सुन्दरकाण्डे द्रष्टुं शक्यते। प्रसङ्गेऽस्मिन् उक्तं यथा –

**न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम्। अनेनैव हि वेगेन गमिष्यामि सुरालयम् ॥**

**यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः। बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥**

**सर्वथा कृतकार्योऽहमेष्यामि सह सीतया । आनयिष्यामि वा लङ्कां समुत्थाप्य सरावणाम् ॥** [7]

एकस्य आदर्शदूतस्य कः दूतधर्मः? इति तद्विषये वाल्मीकिना स्वीये रामायणे सुन्दरकाण्डे यथा वर्णितं न तथान्यत्र ।सः दूतः वेगेन समुद्रलङ्घनं कृत्वा लङ्कां प्रति गच्छति स्म । तदानीं सः बहुश्रमं कृतवान् इति अनुभवन्ति सर्वे समुद्रजीवाः पर्वताश्च। एतस्यापि दूतधर्मस्य समीचीनमेकम् उदाहरणं सुन्दरकाण्डे द्रष्टुं शक्यते। देवतागन्धर्वादिभिः आदिष्टा सुरसा नाम्नी कापि राक्षसी समुद्रगर्भे अत्युत्कटं रूपं धारयित्वा हनुमन्तं खादितुमिच्छति स्म। तस्याः स्वरूपमतीव भयङ्करमासीत्। सा हनुमन्तं दृष्ट्वा अकथयत् हे कपिश्रेष्ठ ! भवन्तं मदीयभोजनरूपेण चिन्तितवन्तः देवाः । तेनाहं त्वां भक्षयिष्यामि। ममाननं यथाशीघ्रं प्रविश इति। तदानीं सुरसायाः वचनानुसारं हनुमान् स्वयं तस्याः मुखमण्डले प्रविष्टवान्। अत्रापि हनुमतः दूतधर्मस्य स्वरूपं ज्ञातुं शक्यते। तथाहि –

**सोऽभिपत्याशु तद्वक्रं निष्पत्य च महाजवः । अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥** [8]

वाल्मीकिरामायणे सुन्दरकाण्डे हनुमतः दूतधर्मस्य विचारप्रसङ्गे तस्य मर्कटस्य आदर्शचिन्तनस्यापि कानिचन उदाहरणानि द्रष्टुं शक्यन्ते। स च मर्कटः रावणस्य अन्तःपुरे कामपि मुक्तामणिसमायुक्तां, सुन्दरविभूषितां, गौरवर्णां, निद्रितां नारीं दृष्ट्वा आदौ इयमेव माता सीता वा इति चिन्तितवान् । ततः परं पुनः आदर्शविचारेण उक्तवान् यत् श्रीरामेण वियुक्ता माता सीता कथं वा सा स्वप्तुमर्हति? कथं वा भोजनादिकं कृत्वा सुन्दरी भवितुमर्हति? ईश्वरः भवतु देवो वा , सा सीता अन्यस्य पुरुषस्य समीपं गन्तुं कदापि नैव शक्नोति। सीतायाः शरीरं तु रामविरहेण आभूषणयुक्तमपि नैव भवितुमर्हति। इयं कदापि सीता नास्तीति। उक्तं यथा –

**न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ॥**

**न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् । नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ॥**

**न हि रामसमः कश्चित् विद्यते त्रिदशेष्वपि । अन्येयमिति निश्चित्य पानभूमौ चचार सः ॥** [9]

तादृशीं रूपवतीं दृष्ट्वा हनुमतः यत् चिन्तनमासीत्। तदेव रामभक्तस्य श्रीहनुमतः आदर्शदूतस्यैव चिन्तनं भवितुमर्हति। अनन्तरं सः ज्ञातवान् यत् सा सीता नासीत्। अपि तु मन्दोदरी आसीत्।

रामायणे सुन्दरकाण्डस्य दशमसर्गे यदा हनुमान् लङ्कायाः सर्वत्र सीतायाः अन्वेषणं कृत्वा तां न प्राप्तवान् तदानीं सः किमपि किमपि मनसि चिन्तितवान्। सः चिन्तयति किं समुद्रातिक्रमणस्य किमपि फलं न लभ्यते वा? मम श्रमः वृथा जातो वा? इति। अन्ये वानराः यदा मां सीताविषये पृच्छन्ति तदानीं किं

ममोत्तरं भविता। ते वानराः मां प्रक्ष्यन्ति हे वीर ! तत्र गत्वा त्वया किं कृतम् । यदि सीतायाः दर्शनं न भवति तर्हि अहं तेषां कृते किं वा वदिष्यामि। एकस्य आदर्शदूतस्य यः दूतधर्मः तदत्र सुस्पष्टं परिलक्ष्यते। सीतायाः दर्शनाभावे तस्य दूतस्य व्यस्ततायाः मनोव्यथायाः च परिचयः अत्र प्राप्यते। प्रसङ्गेऽस्मिन् उक्तं यथा –

दुष्टमन्तःपुरं सर्वं दृष्ट्वा रावणयोषितः । न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति सङ्गताः । गत्वा तत्र त्वया वीर किं कृतं तत् वदस्व नः ॥ [10]

आदर्शदूतस्य यः दूतधर्मः तत् हनुमता कृतं वा न वेति विचारः वाल्मीकिना सुन्दरकाण्डे एकादशसर्गे कृतः। यदा हनुमान् रावणस्य अन्तःपुरे सीतां न प्राप्तवान् तदानीं सः दुःखितस्सन् पुष्करिणीषु, सरोवरे, नद्यां, सरित्सु, दुर्गमपर्वतेषु च अन्वेषणं कृतवान्। रामायणे सीतायाः अन्वेषणाय एतादृशः दूतः हनुमान् एव समर्थो आसीत्। अत्रापि तस्य हनुमतः दूतधर्मस्य विषये समुचितं चिन्तनं कर्तुं शक्यते। तथाहि –

न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् । पल्वलानि तटाकानि सरांसि सरितः तथा ॥
नद्योऽनुपवनान्ताश्च दुर्गाः च धरणीधराः । लोडिता वसुधा सर्वा न च पश्यामि जानकीम् ॥ [11]

अत्र हनुमतः चिन्ताकुलस्वरूपम् आदर्शदूतधर्मस्य प्रमाणीभवति। दूतधर्मस्य प्रकृतं स्वरूपं हनुमान् जानाति स्म। लङ्कायां सीतायाः दर्शनाभावे सः किष्किन्धापुरीं पुनः गन्तुं नेच्छति स्म। तत्र गमने मम कृते बहु क्रन्दनं भविष्यति। इक्ष्वाकुवंशस्य वानराणां सुग्रीवस्यापि विनाशः भविष्यति। जानक्याः दर्शनाभावे अहमत्र वानप्रस्थो भविष्यामि इति हनुमान् निश्चयं करोति। मम हस्ते स्वत एव यत् फलमायाति तस्यैव भक्षणं करोमि। अन्यथा सागरतटे अग्निं संस्थाप्य अहं तत्राग्नौ प्रविशामि। प्रकृतरूपेण विचारणीयमिदं चिन्तनम्। स्वप्रभोः रामचन्द्रस्योपरि तस्य कथं भक्तिभावः विद्यते। हनुमत्सदृशः दूतः कदापि जगत्यस्मिन् नासीत् न वा भविष्यति। प्रसङ्गेऽस्मिन् उक्तं यथा सुन्दरकाण्डे एकादशसर्गे –

घोरमारोदनं मन्ये गते मयि भविष्यति । इक्ष्वाकुकुलनाशः च नाशः चैव वनौकसाम् ॥
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः । न हि शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥
मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ । आशया तौ धरिष्येते वानराः च मनस्विनः ॥
हस्तादानो मुखादानो नियतो वृक्षमूलिकः । वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ॥
सागरानूपजे देशे बहुमूलफलोदके । चितां कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ॥ [12]

सीताया अप्राप्तौ हनुमान् स्वशरीरं त्यक्त्वा मृत्युपथं प्रति गन्तुमिच्छति। सः कथयति मम मरणात् परं मदीयशरीरस्य काकाः अन्ये हिंस्रजीवाश्च भक्षणं करिष्यन्ति। मार्गान्तरेण जानक्याः अभावे जले स्वात्मनः समाधिं करोमि। हनुमतः एतादृशं चिन्तनं केवलमेकस्य आदर्शदूतस्य दूतधर्ममेव सूचयति नान्यत् किमपि। प्रसङ्गेऽस्मिन् उक्तं यथा –

**उपविष्टस्य वा सम्यक् लिङ्गिनं साधयिष्यतः। शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥**

**इदमप्यृषिभिः दृष्टं निर्याणमिति मे मतिः । सम्यगापः प्रवेक्ष्यामि न चेत् पश्यामि जानकीम् ॥** [13]

आदर्शदूतस्य प्रकृतिस्तु हनुमति आसीत्। तत्सहितं तस्य पार्श्वे दूरदृष्टिशक्तिरपि आसीत्। अर्थात् हनुमान् सीतां न प्राप्य अग्रे किं किं भवितुर्महति तत्सर्वं ज्ञातुं प्रभवति स्म। यदि किष्किन्धां प्रति प्रत्यागमनं सीतां विना भवति तर्हि सर्वैः वानरैः सह अङ्गदोऽपि प्राणत्यागं करिष्यति। एतेषां प्राणिनां वधरूपं पापमपि ममोपरि आपतति।

यः पुरुषः जीवति, सः कदाचित् कल्याणस्याधारो भवति। अत एव अहं एतेषां प्राणिनां जीवनधारणेन जीवामि। जीवनधारणैः तैस्सह ममापि अभिष्टसुखप्राप्तिरवश्यं भविष्यति। एवञ्च मनसि नैकेन दुःखधारणेन हनुमान् किमपि किमपि चिन्तयति स्म मातरं सीतां विना । अत्र द्रष्टव्यमेकस्य वानरस्य कथं दुरदृष्टिः तथा दूतकर्तव्यस्य कथं निष्ठा वर्णिता वाल्मीकिना। प्रसङ्गेऽस्मिन् उक्तं यथा –

**यदीतः प्रतिगच्छामि सीतामनधिगम्य ताम् । अङ्गदः सहितैः सर्वैः वानरैः न भविष्यति ॥**

**विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम् । तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गमः ॥**

**एवं बहुविधं दुःखं मनसा धारयन् मुहुः । नाध्यगच्छन् तदा पारं शोकस्य कपिकुञ्जरः ॥** [14]

वाल्मीकिरामायणे अष्टाविंशसर्गे यदा हनुमान् सीतायाः अनुसन्धानं कर्तुं समर्थोऽभूत्। तदानीं हनुमान् चिन्तितवान् अहं स्वामिना श्रीरामेण नियुक्तस्सन् अन्ते गुप्तरूपेण सीतायाः अनुसन्धानं प्राप्य राक्षसीनां वैभवं रावणस्य च प्रभावं सर्वमपि सम्यक् ज्ञातवान्। एतदेव हनुमतः दूतधर्मस्य विशिष्टं प्रमाणं भवितुमर्हति। तेनोक्तं यथा सुन्दरकाण्डे –

**चारेण तु सयुक्तेन शत्रोः शक्तिमवेक्षता । गूढेन चरता तावदवेक्षितमिदं मया ॥**

**राक्षसानां विशेषः च पुरी चेयमवेक्षिता । राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥** [15]

सुन्दरकाण्डे एकत्रिंशसर्गे सीतां दृष्ट्वा तां प्रति तस्य गूढदुःखवेदना, भक्तिः, श्रद्धा, प्रेमभावः, मातृत्वचिन्तनं च यथा कविना वर्णितं तत् करुणरससागरो भवति। तदेव पठित्वा अनुभूय च

काव्यरसपिपासकाः सततं करुणरससागरे निमज्जन्ति। महातेजाः हनुमान् स्वशिरसि अञ्जलिं संस्थाप्य विनीतरूपेण दीनतापूर्वकं सीतायाः समीपं गत्वा मधुरवाण्या अकथयत् – हे देवि ! एतस्य वृक्षस्य शाखायां भारं दत्वा भवती किमर्थं तिष्ठति? कमलपत्रात् पतितं जलमिव तव चक्षुषः आगतमिदं शोकाश्रु किमर्थम्? हे देवि ! भवती देवता-असुर-नाग-गन्धर्व-राक्षस-किन्नर-रुद्र-मरुद्गणादिषु का भवति? भवती तु कापि देवता इति अहं चिन्तयामि। अत्र सीतां प्रति तस्य हनुमतः गद्गदभावः प्रश्नकरणं च एकस्य आदर्शदूतस्य स्वरूपं प्रमाणयति। प्रसङ्गेऽस्मिन् उक्तं यथा –

तामब्रवीत् महातेजा हनुमान् मारुतात्मजः । शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥
का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनी । द्रुमस्य शाखामालम्ब्य तिष्ठति त्वमनिन्दिता ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् । पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥
सुराणामसुराणां च नागगन्धर्वरक्षसाम् । यक्षाणां किन्नराणां च का त्वं भवसि शोभने ॥
का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ [16]

वाल्मीकिरामायणे सुन्दरकाण्डे सीतया सह सम्भाषणं, रामस्य मुद्रिकादानं, यथाशीघ्रं श्रीरामेण सीतायाः लङ्कातः नयनम्, सीतायाः दुःखनिवारणम् इत्येते विषयाः हनुमता सीतां प्रति आश्वासनार्थं कृताः उक्ताश्च विहिताः। तेनैव आदर्शदूतधर्मस्य लक्षणं सुन्दरकाण्डे सुस्पष्टं द्रष्टुं शक्यते।

**उपसंहारः**

संस्कृतकाव्यजगति सन्त्यनेकानि दूतकाव्यानि मनोहराणि । तत्र सर्वत्र ये ये दूताः सन्ति ते सर्वेऽपि आदर्शदूतस्य कार्यं कृतवन्तः । यथा मेघदूते मेघस्य दौत्यकर्म तथा हंसदूते हंसस्य दौत्यकर्म । तथापि वाल्मीकिरामायणे हनुमतः यः दूतधर्मः वाल्मीकिना समुपवर्णितः तदन्येन कविना न कुत्रापि वर्णितः । एकस्य आदर्शदूतस्य तत्कर्मणः तस्य धर्मस्य च बहूनि प्रमाणानि रामायणे सुन्दरकाण्डे निरूपितानि वर्तन्ते । तेनैव हनुमति आदर्शदूतस्य लक्षणानि द्रष्टुं शक्यन्ते अस्माभिः ।

*********

## शब्दसङ्केतः

उणादि. – उणादिसूत्रम्
रामा. – रामायणम्
मनु. – मनुस्मृतिः
बाल.- बालकाण्डः
सुन्दर. – सुन्दरकाण्डः

## शोधपत्रसन्दर्भाः

1. बाल. 2.15
2. बाल. 2.36
3.उणादि. 584
4. मनु. 2.12
5. रामा.सुन्दर. 2.39
6. सुन्दर. 1.28
7. रामा. सुन्दर. 1.37-39
8. सुन्दर. 1.152
9. सुन्दर. 9. 2-3
10. सुन्दर – 10.6-7
11. सुन्दर. 11.3-4
12.सुन्दर . 11.37-41
13. सुन्दर. 11. 42-42
14. सुन्दर. 11.46-48
15. सुन्दर. 18.4-5
16. सुन्दर. 31.1-5

## सहायकग्रन्थाः

1.वैयाकरणसिद्धान्तकौमुदी-भट्टोजीदीक्षितः
2.मनुस्मृतिः-मनुः
3.वाल्मीकिरामायणः(सुन्दरकाण्डः)-वाल्मीकिः
4.श्रीमद्वाल्मीकीयरामायणं सुन्दरकाण्डः-उडियाभाषानुवादः– अनुवादकः पण्डितमार्कण्डदाशः

# श्रीमद्वाल्मीकीयरामायणे सत्यमहिमा

**क.जयनारायणः**

सहायकाचार्यः , मीमांसा विभागः

मद्रपुरी संस्कृत महाविद्यालयः, मयूरपुरी, चेन्नै

विश्ववाङ्मये श्रीमद्वाल्मीकीयरामायणस्य स्थानम् अनितरसाधारणमस्ति। लौकिके संस्कृतवाङ्मये रामायणरचनायाः पूर्वं न काचिदपि अन्या छन्दोबद्धा रचना उपलभ्यते। श्रीमद्रामायणस्य नायकः श्रीरामचन्द्रः धर्मज्ञः,धर्मपालकश्च ।सः लोके धर्मस्य मर्यादां प्रतिष्ठितुम् अवतीर्णः महापुरुषः । तस्य सर्वमपि चरितं धर्मस्य प्रमाणभूतम् , लोकानामादर्शभूतञ्च । सः महात्मा दिव्यांशेनावतीर्णोऽपि मानवसमाजस्य ये ये धार्मिकाः, सामाजिकाः नीतिसम्मताश्च नियमाः तान् सर्वान् यथावत्परिपाल्य धर्मसम्मतस्य आदर्शजीवितस्य उदाहरणत्वेन स्वमेव जीवितं लोकानां पुरतः प्रास्तौत् ।

दशरथस्य चतुर्णां पुत्राणाम् यत् सौभ्रात्रम् , विशिष्य रामलक्ष्मणयोः, भरतशत्रुघ्नयोश्च यत् मिथस्सौहार्दं , सर्वेषां भ्रातॄणां स्वे ज्येष्ठे भ्रातरि श्रीरामचन्द्रे या प्रेमपूर्णा भक्तिः , श्रीरामचन्द्रस्य कनिष्ठेषु यत् पितृवात्सल्यं तद्रामायणादन्यत्र दुर्लभमेव ।

वेदसम्मते सामाजिके भारतीयजीविते मातापित्रोः स्थानमद्वितीयम्। तयोरनन्तरमाचार्यो गौरवमर्हति। वेदाः वेदोदितस्य धर्मस्य निर्वाहाय मानवस्य सम्पूर्णं जीवितं ब्रह्मचर्यं , गार्हस्थ्यं , वानप्रस्थं , सन्यासम् इति चतुर्षु आश्रमेषु विभजन्ति । तत्र गृहस्थाश्रमस्य प्रवृत्तिरूपत्वात् तत्र सत्यपालनं धर्माचरणञ्च सुलभम् , किन्तु अतीव दुष्करम् । धर्मशास्त्रेषु उभयोः प्रथमं निरूपितत्वात् तयोः अन्येभ्यः कर्मभ्यः प्राधान्यं स्पष्टमेव।

रामायणस्य आरम्भेऽपि अयोध्याधिपतेः दशरथमहाराजस्य राज्ये निवसतां जनानां गुणान् वर्णयति – **"दीर्घायुषो नरास्सर्वे धर्मं सत्यं च संश्रिताः"**।(१ – ६ – १८) **"नास्तिको नानृती वापि न कश्चिदबहुश्रुतः"**॥ (१ – ६ – १४) इति ॥ सत्यधर्मयोः महिमा रामायणे विस्तरेण वर्णिता । वेदेनापि तावुभावेव अवश्यपालनीयत्वेन अनुशिष्टौ। रामायणस्य सर्वेषु काण्डेषु विशिष्य अयोध्याकाण्डे सत्यधर्मयोः महिमानं प्रकाशयति । तथाहि–

**"आहुस्सत्यं हि परमं धर्मं धर्मविदो जनाः । सत्यमाश्रित्य च मया त्वं धर्मं प्रति चोदितः ॥**
**संश्रुत्य शैब्यश्श्येनाय स्वां तनुं जगतीपतिः । प्रदाय पक्षिणे राजा जगाम गतिमुत्तमाम् ॥**
**तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे । याचमाने स्वके नेत्रे उद्धृत्याविमना ददौ ॥**
**सरितां तु पतिः स्वल्पां मर्यादां सत्यमन्वितः । सत्यानुरोधात्समये वेलां स्वां नातिवर्तते ॥**

**सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः। सत्यमेवाक्षया वेदास्सत्येनावाप्यते परम् ॥**

(वा.रा.२–१४–३,४,५,६,७)

**ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे । सत्यवादी हि लोकेऽस्मिन् परं गच्छति चाक्षयम् ॥** (२- १०९ - ११)

**सत्यमेवेश्वरो लोके सत्ये धर्मस्सदाश्रितः । सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥** (२- १०९- १३)

**दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च । वेदास्सत्यप्रतिष्ठानाः तस्मात्सत्यपरो भवेत् ॥** इति ॥ (२-१०९-१४)

अनेनेदं स्पष्टं , यत् सर्वेऽपि धर्मवेत्तारः इदं जानन्ति , यत् सत्यवदनमेव परमो धर्मः । ऋषयः, देवाश्च, सर्वेऽपि सत्यमेव परमं धर्मं मेनिरे ।

अग्रे पुनः राममुखेन सत्यस्य महिमानमुद्घाटयन् वेदहृदयकोविदो भगवान् वाल्मीकिः कथयति - **"प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं ध्रुवम् । भारस्सत्पुरुषैश्चीर्णस्तदर्थमभिनन्द्यते ॥**"(२- १०९–१९) श्रीरामचन्द्रः जाबालेः प्रत्यक्षैकप्रमाणस्य नास्तिकदर्शनस्य निरासं कृत्वा सत्यस्य महिमानमेवं प्रकटयति –"अहं परमधर्मभूतं सत्यमात्मधर्मत्वेन स्वयं पश्यामि । अर्थात् , आत्मनः अविनाभूतत्वेन पश्यामि । अत एव सत्पुरुषास्सर्वेऽपि सत्यरूपमेव धर्मम् आजीवितं पालयाञ्चक्रुः । तदर्थमेव चिराय जटादिभारमप्यवहन् , अर्थात् शारीरं संस्कारमपि उपैक्षन्त । अतः सः सर्वेषां परमधर्मत्वेन अभिमतः" इति ।

अथ सत्यपालनेन ये वा परां गतिं प्रापुः , सत्यपालनाय ये वा स्वं जीवितं तृणायापि नामन्यन्त , तेषां पुण्यचरितानां पवित्रमाचरणम् उदाहरणत्वेन प्रस्तुवन् भगवान् वाल्मीकिः कथयति - "जगतीपतिः शैब्यः सत्यं पालयितुमेव श्येनाय स्वदेहात् सकलमपि मांसम् अविमनाः उत्कृत्य अदात् । अलर्कनामा राजर्षिः स्वनेत्रे एव कस्मैचिद् ब्रह्मवादिने ब्राह्मणाय दत्तवान् । सरितांपतिः समुद्रोऽपि सत्यव्रतादेव स्वां वेलां नातिवर्तते ।" इति ॥

किं बहुना? मानुषजीवितरूपस्य दिव्यसौधरूपस्य मूलभित्तित्वेन ऋषिभिः सत्यमेव प्रतिष्ठितम् । चारित्रस्य शीलस्य च मूलं सत्यमेव । सत्यस्य महत्त्वं निर्वर्णयन् श्रीरामचन्द्रः जाबालिं कथयति – **"सत्यमेवानृशंसं च राजवृत्तं सनातनम् । तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः॥**"(२ – १०९-१०) इति ॥

भारतीयं यत् सनातनं राजवृत्तं तत् सत्ये एव प्रतिष्ठितम् । अत एव न प्राण्युपघातकम् अनुकम्पया पूर्णं च । राजवृत्ते न कपटस्य न वा छलस्य अणुमात्रमपि स्थानम् । यदा पितृसदृशाः राजानः एव स्वसन्तानसदृशीं प्रजां कपटेन अथवा अनृतेन वञ्चयेयुः , तर्हि तस्याः का गतिः? अत एव भगवान् श्रीरामचन्द्रः इदं स्पष्टीकरोति यत् राज्यशासनमपि सत्यमूलकमेव प्रजानाम् अभ्युदयाय निःश्रेयसाय च भवति । मानुषं जीवितमपि सत्ये एव प्रतिष्ठितम् इति च । सत्यविरहितः समाजः अथवा लोकः नं चिरं सुखमेधते ॥

# ॥ सीतारामचन्द्रयोः लोकोत्तरः मानुषधर्मः ॥

डा ॥ गुरुराज कल्कूरः

न्यायविभागः, मद्रपुरीसंस्कृतमहाविद्यालयः

यश्च रामं न पश्येत्तु यं च रामो न पश्यति। निन्दितः सः भवेल्लोके स्वात्माप्येवं विगर्हते। यः श्रीरामचन्द्रं न पश्यति रामचन्द्रः अपि यं न पश्यति तादृशः पुमान् स्वयमेव स्वात्मना निन्दितः भवेत् इति अयं श्लोकः श्रीरामचरित्रस्य महात्म्यं प्रकटयति। लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति। दुःखतप्तराक्षससमुदायं दृष्ट्वा श्रीरामः विभीषणमादिदेश हे विभीषण तव अग्रजस्य रावणस्य अन्त्यसंस्कारं कुरु इति। तदा विभीषणः रामं प्रत्यवदत् -

त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा। नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शनम् ॥

भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः। रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात् ॥

हे श्रीराम । धिक्कृतधर्मः परित्यक्तसदाचारः क्रूरी निर्दयी अनृतवादी परस्त्रीकामुकः यो रावणः तस्य दहनसंस्काराख्यं कर्म नाहं करिष्ये। अत्र ज्येष्ठस्य भ्रातुः संस्काराकरणात् मां नृशंसः इति लोकाः प्रथमं वक्ष्यन्ति। अनन्तरं च रावणस्य परदाराभिमर्शनादिदोषान् श्रुत्वा सम्यगेव विभीषणेन कृतमिति अतः अस्माकं न दोषः। रावणस्य परदाराभिमर्शकत्वेन संस्कारानर्हत्वावगमेन तादृशस्य संस्काराकरणे प्रत्यवायो नास्ति। परदारापहर्तुः पतितत्वेन संस्कारानर्हत्वमुक्तं ब्रह्मपुराणे -

महापातकिनो ये च पतितास्ते प्रकीर्तिताः।

पतितानां न दाहः स्यात् नान्त्येष्टिः नास्थिसञ्चयः ॥

यद्यपि विभीषणेन अधर्मिष्ठत्वं प्रतिपादितम् तथा धर्मिष्ठत्वमपि प्रतिपादितम्।

एषोऽऽहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्रवीर्यः।

एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥

इत्यनेन वचनेन। परन्तु विभीषणः एवं मनुते रावणकृतं वेदाध्ययनं निष्फलं भवेत् अनाचारवशात् परावमानेन च। अत्र विदुरवचनं प्रमाणम् उद्योगपर्वणि -

आचारहीनं न पुनन्ति वेदाः यद्यप्यधीतास्सह षड्भिरङ्गैः।

छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः॥

परावमानेन वेदाध्ययनं निष्फलमित्येतत् आदिपर्वणि अवगम्यते -

अधीयानः पण्डितं मन्यमानः यो विद्यया हन्ति यशः परेषाम्।

तस्यान्तवन्तश्च भवन्ति लोकाः न चास्य तद्ब्रह्मफलं ददाति॥ इति।

एवमेव अनृतवचनेन यशसः नष्टत्वात् अश्रद्धया कृतत्वेन यज्ञदानयोः तामसत्वाच्च रावणस्य धार्मिकत्वम् अनुपपन्नमिति मत्वा विभीषणेन रावणसंस्कारे अकर्तव्यत्वेन प्रतिपादिते सति रामः सोपपत्तिकं तस्य हितकरवचनमाह -

विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदः।

अनेन पूर्वोपकारिणः हितमवश्यं कर्तव्यं सूचितम् । इदं "कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः" मैनाकवचनात् "न हि कृतमुपकारं साधवो विस्मरन्ति" इति अभियुक्तवचनाच्च अवगम्यते। अत्र अवश्यं तु हितं वाच्यमित्यनेन अयमर्थः अवगम्यते - रावणवधे साहाय्यमाचरतो विभीषणस्य हितोपदेशन अवश्यं प्रत्युपकारः कर्तव्यः तथा च युद्धमरणेन निरस्तसमस्तदोषस्य रावणस्य संस्कारकरणमेव कृत्स्नराज्यप्राप्तिहेतुत्वात् विभीषणस्य हितमिति विचिन्त्य संस्कारः कर्तव्यः इति हितमुपदिष्टवान् रामः। रावणे आहिताग्नित्व-तपस्वित्वादिगुणानाम् अधर्मानृतादिदोषैः नष्टत्वेन दोषाणां प्राबल्येऽपि सर्वदोषोपमर्दकत्वेन दोषापेक्षयापि प्रबलतरयुद्धविजयादिलक्षणगुणसद्भावेन संस्कारार्हः रावणः इत्याह -

अधर्मानृतसंयुक्तः काममेष निशाचरः। तेजस्वी बलवान् शूरः संग्रामेषु च नित्यशः॥

शतक्रतुमखैर्देवैः श्रूयते न पराजितः। महात्मा बलसम्पन्नः रावणो लोकरावणः॥

अनेन युद्धे मरणवत् युद्धे जयोऽपि राज्ञां उत्कृष्टो धर्मः। तथा पराजयोऽपि अत्यन्तपापदायकः इति सूचितम्। इदं च संस्कारकरणं ममापि अभिमतमिति श्रीरामः लोकोत्तरं वचनं विभीषणं प्रत्याह -

मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम्। क्रियतामस्य संस्कारः ममाप्येष यथा तव॥

त्वत्सकाशात् दशग्रीवः संस्कारं विधिपूर्वकम्।

प्राप्तुमर्हति धर्मज्ञ त्वं यशोभाक् भविष्यति ॥

मदीयशत्रोः रावणस्य संस्कारकरणेन मम मनसि वैषम्यं भविष्यति इति न मन्तव्यं मरणानन्तरं रावणे मम द्वेषो नास्ति। प्रयोजनं च सीताप्राप्तिलक्षणमस्माकं सम्पन्नम्। अतः परलोकगतस्य रावणस्य हिताचरणं तव मम च आवश्यकमिति प्रतिपादनेन महापुरुषाः शत्रोः मरणानन्तरं पूर्वकृतमपराधं न स्मरन्ति। प्रत्युत तस्य हितमाचरन्तीति सूचितम्। श्रीरामेण भिन्नभिन्नप्रसङ्गेषु आदर्शपुत्रः इति आदर्शपतिः इति आदर्शराजः इति आदर्शमित्रमिति प्रदर्शितं चेदपि अस्मिन् प्रसङ्गे आदर्शशत्रुः इति अपि प्रदर्शितम्। अनन्तरं श्रीरामः हनूमन्तं समीपे आहूय - सीतां मम सन्निधौ आनय इत्याज्ञापयत्। तदनुसारेण आञ्जनेयः सीतादेवीं प्राप्य नमश्चकार -

वैदेहि कुशलं रामः सहसुग्रीवलक्ष्मणः। कुशलं त्वाह सिद्धार्थो हतशत्रुररिंदमः ॥

हे वैदेहि सहसुग्रीवसलक्ष्मणः रामः शत्रुहननेन सफलमनोरथः तव कुशलं पप्रच्छ। भर्तुः प्रियं विजयसंश्रितमुपश्रुत्य हर्षगद्गदया गिरा परमप्रीता सीता अब्रवीत् -

हे आञ्जनेय प्रहर्षवशमापन्नायाः मे प्रतिवचनं न स्फुरति। न चायमस्ति नियमः जीवने निरन्तरं दुःखपङ्क्तिरेव प्राप्यते इति।

"चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः" इत्युक्तिदिशा मे भाग्योदयः प्राप्तः। एतादृशीं प्रियवार्तामाकर्ण्य सीता आञ्जनेयम् एवमभिनन्दति -

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च। राज्यं वा त्रिषुलोकेषु नैतदर्हति भाषितुम् ॥

सीतावचनमाकर्ण्य मरुतिना यदभिहितं तदस्मान् रोमाञ्चयति। तच्च -

तवेतद्वचनं सौम्ये सारवत् स्निग्धमेव च। रत्नौघात् द्विविधाच्चापि देवराज्यात् विशिष्यते ॥

तव सारवन्तं स्नेहपूर्णं वचनं रत्नराश्यपेक्षया अमरावतिसिंहासनापेक्षया च अधिकम्। ममैतत् अलम्। तव वात्सल्यं मे सर्वदा भूयात् इत्यकथयत्। मारुतिवचनं श्रुत्वा सीता तमनुगृह्णाति -

तेजः क्षमा धृतिर्धैर्यं विनीतत्वं न संशयः।

एते चान्ये च बहवः गुणास्त्वय्यैव शोभनाः ॥

इति तदनु आञ्जनेयेन रक्षणाय राक्षसराजनिक्षिप्तानां त्वदुपद्रवकारिणीनां राक्षसीनां वक्षोविक्षोभण नखविदारणकर्णनासाच्छेदनादिना त्वदाज्ञया वधं विधातुमिच्छामि ।

इमास्तु खलु राक्षस्यः यदि त्वमनुमन्यसे ।
हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा ॥

इत्येवं पृष्टा सीता –

राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया । विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥
पापानां वा शुभानां वा वधार्हाणामथापि वा ।
कार्यं कारुण्यमार्येण *न कश्चित् नापराध्यति*।

इत्येवं रावाणाश्रयवश्यानां राक्षसस्त्रीणां विषये कः कुप्येत् । मम प्रारब्धस्य तासां कुतेऽयं शिक्षा –

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥

इति रीत्या अवश्यमेवानुभोक्तव्यम् । किञ्च महात्मभिः पापिष्ठानां विषये वा सत्पुरुषाणां विषये वा वधार्हाणां विषये वा कारुण्यभावेनैव वर्तितव्यम् । यतो हि न हि कश्चित् पुरुषः अधर्ममननुष्टाय इह जगतीतले जीवति । अस्य च अयमभिसन्धिः –

अहर्निशं क्रियमाणानि अस्माकमपराधसहस्राणि वयमौदार्येण क्षमामहे । तान्येव अपराधसहस्राणि अन्यैः क्रियमाणानि न क्षन्तव्यानि भवन्ति । कुतोऽयं पक्षपातः । निरन्तरं वत्सरपर्यन्तं उपद्रवे अनुभूते अपि सीतायाः ईषदपि मनोविकारः औदार्यस्य ह्रासः न दृश्यते । ईदृशीं सीतां दृष्ट्वा अत्याश्चर्यमानन्दञ्च अनुबभूव मारुतिः ।

॥ इति शम् ॥

# श्रीमद्रामायणकाव्यमहिमा धर्मचिन्तनं च

सौन्दर्यपुरम् डा. श्री. मुकुन्दः

विशिष्टाद्वैतवेदान्ताध्यापकः

श्रीमदहोबिलमठीयआदर्शसंस्कृतमहाविद्यालयः,

मधुरान्तकम् – 603306

सर्वसम्मतं हि एतत् यद्भारतीयं पुरातनं इतिहासरूपं श्रीमद्रामायणम् सर्वजगतां गौरवमातनोति। सीतायाश्चरितं महत् पौलस्त्यवधम् इत्यन्यपरनामाभ्यां श्रुतं काव्यरत्नमिदं वेदं समुपबृंहयत्प्राचेतसादृषेः समुपजातं वेदवेद्ये परे पुंसि श्रीमन्नारायणे दशरथात्मजे जाते सति। अत एवोक्तं – इति हासपुराणाभ्यां वे समुपबृंहयेत् इति। गायत्त्याश्च स्वरूपं तद्रामायणमनुत्तमम् इति श्रीमद्रामायणस्य उत्तरकाण्डे फलश्रुतौ पठ्यते। चिन्तयेद्राघवं नित्यं श्रेयः प्राप्तुं य इच्छति इत्यप्युक्तमत्र। श्रीरामपट्टाभिषेकसर्गे-

**भक्त्या रामस्य येचेमां संहितामृषिणा कृताम्। लेखयन्तीह च नराः तेषां वासस्त्रिविष्टपे॥**

**देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात्तथा। रामायणस्य श्रवणात् तुष्यन्ति पितरस्तथा॥**

उत्तरखाण्डे च एवं सूचितम् भवति –

**प्रयागादितीर्थानि गङ्गाद्यास्सरितस्तथा। नैमिशादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि॥**

गतानि तेन लोकेस्मिन् येन रामायणं श्रुतम्। इत्येवं स्वयमे वदतात्रभवता महर्षिणा श्रीमद्रामायणमिदं सर्वैरेव संग्रहमीयम्, श्रावणीयम्, पठनीयम् तथा मननीयं चेति बोध्यते। आदिकविरयं मुनिः – प्राचेतसोहं दशमः पुत्रोस्मि रघुनन्दन। न स्मराम्यनृतं वाक्यं इति स्वात्मानं न्यवेदयति। राघवाय उत्तरकाण्डे अध्यात्मरामायणेपि वाल्मीकेः प्रचेतसः पुत्रता प्रतिपादिता। स्वन्धपुरामे वैशाकमाहात्म्यप्रसङ्गे भगवान् मुनिरयं जन्मान्तरे व्याध आसीत्। ततोपि पूर्वस्मिन् जन्मनि स्तम्भनामा श्रीवत्सगोत्रोद्भूत ब्राह्मण आसीत्। व्याधजन्मनि शङ्खमुनेः सङ्गात् रामनाम जपेन जन्मान्तरे ब्राह्मणो अभूत्। तदा अस्य रत्नाकरः इति नाम भवति। तत्पिता प्रचेताः भवेत्। तज्जन्मनि पूर्वसंस्कारवशात् व्याधप्रसङ्गात् व्याधकर्मम्येवायं संलग्न आसीत्। तदनु सप्तर्षिसङ्गात् मरा मरा ति जपित्वा रामतारकमन्त्रबलेन तपसि स्थितः। वाल्मीकात् वृतदेहत्वाच्च वाल्मीकिरिति ख्यातः। इति निगदितम्। एवमे अस्य मुनेः चरितं आनन्दरामायणेषु भविष्यपुराणेषु च प्रस्तूयते।

नानापुराणेषु च रामायणमाहात्म्यं वाल्मीकिमहिमा च उपगीयते। अग्निपुराणे, गरुडपुराणे पूर्वखण्डे, स्कान्दपुराणे वैष्णवखम्डे वैशाखमाहात्म्ये, अध्यात्मरामायणे च तत्र तत्र श्रीमद्रामायण माहात्म्यं सप्रपञ्चतया सादरं उपन्यस्तम् भवति। सर्वैरेव कविवरैः आदिकवविरयं महामुनि मार्गदर्शी समुपजीव्यतया श्रद्धातिशयेन समनुध्यातः।

शोकः श्लोकत्वमागतः इतीदं मुनेर्वचनं कालिदासेन महाकविना रघुवंशे–

निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः इति। ध्वनिकारेण श्रीमदानन्दवर्धनेन –

काव्यस्यात्मा स एवार्थः तथाचादिकवेः पुरा । क्रौञ्चद्वन्द्व वियोगोत्थः शोकः श्लोकत्वमागतः ॥

इति। भगवता व्यासेनापि श्रीमन्महाभारते द्रोणपर्वणि श्रीमद्रामायणतः –

अपि चायं पुरा गीतः श्लोकं वाल्मीकिना भुवि। न हन्तव्या स्त्रियश्चेति यद् ब्रवीमि प्लवङ्गमम् ॥

सर्वकालं मनुष्येन व्यवसायवता सदा। पीडाकरममित्राणं यच्च कर्तव्यमेव तत्॥

इतीयं पङ्क्तिः समुदाहृता। अनन्तरं – जगज्जिघित्सातुरकण्ठपद्धतिः न वा नैताहृत तृप्तिरन्तकः। इत्येवं पद्यं वाल्मीकेः – न स सङ्कुचितः पन्थाः येन वाली हतो गतः। समये तिषठ सुग्रीव मा वालिपथमन्वगाः॥ इत्यस्य श्लोकस्य अनुकारि। अत एव श्रीमद्वेदान्तदेशिकेन पादुकासहस्रे काव्यारम्भे एव – दिव्यस्थानात् त्वमिव जगतीं पादुके गाहमाना

पादन्यासं प्रथममनघा भारती यत्र चक्रे। योगक्षेमं सकलजगतां त्वय्यधीं सराजन्।

वाचं दिव्यां दिशतु वसुधा श्रोत्रजन्मा मुनिर्मे॥ इति वाल्मीकेः प्रशंसा क्रियते वाग्लाभाय। विविधाः रामायणमधिकृत्यकृताः टीकाः तन्महिमानं प्रदर्शयन्ति। कतक-तिलक-भूषण-शिरोमणि-तीर्थ-रमानुजीय-विवेक- तिलक - धर्माकूत - कूट-चतुरर्थ- दीपिका-विरोधपरिहार-श्रृङ्गार-सुधाकर-तात्पर्यतरणि-सप्तत्रिम्बमनोरमाप्रभृतयः विविधकालिका एता विद्वद्भिः समाहृताः।

आद्यं महाकाव्यमिदं श्रीमद्रामायणं काव्यादर्शजन्मभूमिः इति न कोपि अत्र सन्देहः। अग्निपुराणे, मम्मटकृत काव्यप्रकाशे, ध्वन्यालोके, आनन्दवर्धनेन च यदुक्तं काव्यलक्षणं तस्य मूलभूतं श्रीवाल्मीकेर्वचनम् एव। वचनं तु बालकाण्डे –

रसैश्श्रृङ्गारकारुण्य हास्यरौद्रभयानकैः। वीरादिभी रसैर्युक्तं काव्यमेतदुदाहृतम्॥ इति वचनमेव। एतदेव अनुसृत्य यादवाभ्युदये श्रीमदाचार्वर्येण –

स कविः कथ्यते स्रष्टा रमते यत्र भारती। रसभावगुणीभूतैः अलङ्कारैर्गुणोदयैः॥

इत्येवं सलक्षणं उपन्यस्तम्॥

वस्तुवैशिष्ट्यानन्तरं काव्यस्य रसनिष्पत्तिः द्रष्टव्या। आनन्दवर्धनेन ध्वन्यालोके आदिकवेः वाल्मीकेः निहित सहचरविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिमतः। शोको हि करुमायाः आविर्भाविः इत्युक्तम्। रामायणे हि करुणो रसः स्वयमादिकविना सूचितः। निर्व्यूढश्च स एव सीता अत्यन्त वियोगपर्यन्तमेव सप्रपञ्चमुपस्थापयता इति।

**मा निषाद प्रतिष्ठां त्वम् अगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकं अवधीः काममोहितम्॥**

इति रामाय मूलश्लोके करुणो रसः ध्वन्यते। विरकातरा क्रौञ्ची व्याधविद्धः क्रौञ्चश्चालम्भनविभावः। व्याधकर्तृकक्रौञ्चवधमुद्दीपनविभावः। क्रौञ्च्याक्रन्दनमनुभावः। विभाव अनुभावाभ्यां अभिव्यञ्ज्यते चिन्ताविषाददैन्यमोहादिभिः संचारिभावैः संचार्यमाणः शोकः स्थायीभावः करुणरसतां च समुपेतः। अनन्तरं सुन्दरततमे सुन्दरकाण्डे सुन्दरतया घटितानि सर्वाण्येव पद्यानि गुणालङ्काररसात्मकानि इति निरूप्यते टीकाकारैः। एवमन्यत्रापि नवरसानां विविधालङ्काराणां ध्वनेश्चापि प्रतिपादनं सहृदयैः सम्यगूह्यम् भवति। इत्येवं क्रमेण अत्र रामायणे विविधाः विषयाः वर्ण्यन्ते।

अनन्तरं ज्योतिषविषयोपि अत्र वर्णितं भवति। रामावतारसमये ग्रहाणां स्थितिः वर्ण्यते। यथा चैत्रे नावमिके तिथौ नक्षत्रेतिथिदैवत्ये पुनर्वसू इति। ग्रहेषु पञ्चसु स्वोच्छसंस्थेषु अर्थात् सूर्यः मेषे, गुरुचन्द्रयोगः, कर्कटे, मन्दस्तुतायाम्, मङ्गलो मकरे, काव्यो मीने, राहुमित्रं केतुश्च धनुर्मिथुनयोः, बुधः समः सूर्यसहितः। सूर्य, गुरु, मङ्गल, मन्द, कवयः, स्वोच्छस्थानेषु सत्सु कर्कटे लग्ने चन्द्रादिपत्ये सति इत्यर्थः। ततः **वाक्पदाविन्दुना सह** – वाक्पतौ कर्कटे लग्ने इन्दुना सह कौसल्याजनयद्रामम् इति वर्णितम्। अनन्तरं बालकाण्डे रामस्य वनगमनकाले एकराशौ ग्रहाणां समेत्य स्थितिः इति।

यथा - **दारुणास्सोममभ्येत्य ग्रहास्सर्वे व्यवस्थिताः। नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः॥** इति॥

तदनन्तरं श्रीमद्रामायणे शकुनशास्त्रं च उपदिष्टमस्ति। यथा जामदर्नि अभियोगवर्णने –

**भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम्। असौम्याः पक्षि घोराः मृगश्चापि प्रदक्षिणाः॥**

इत्येवं क्रमेण बलातिबलाजृम्बकादीनाम् अस्त्राणां शस्त्राणां कूटशाल्मलिशक्तितोमरादीनां, पुष्पकविमानादि विविधयानानां च वर्णनं तत्र तत्र द्रष्टुं शक्यते।

## ॥ श्रीमद्रामायणे धर्मचिन्तनम् ॥

श्रीमद्रामायणं सदुपदेशात्मकं धर्मशास्त्रम्। तथा च अयोध्या काण्डे माता पितृसेवा , पतिभक्तिः, सत्यमहिमा अर्थात् सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् इत्यादिवचनैः प्रतिपादितम्। अनन्तरं राजनीतिः, विभीषणशरणागतिः, सामात्यानीतिः, मनोविज्ञानं, हनुमन्निर्वेदः, राक्षसीमध्ये सीतास्थितिः रामाधिष्ठित सीता अग्निप्रवेशः त्येवं तत्र तत्र द्रष्टुं शक्यते।

धर्माचरणे जपतपसः प्रधानांशभूते तपोमूलं श्रीमद्रामायणम्। यतो हि -

तपस्स्वाध्यायनिरतं तपस्वि वाग्विदां वरम्। नारदं परिपप्रच्छ वाल्मीकेर्मुनिपुङ्गवम्॥

तपस्स्वाध्यायनिरतं वाग्विदां वरं नारदं तपस्वी वाल्मीकिः पप्रच्छ। यत् षोडशगुणात्मकत्वं प्रति तदेव रामकथनोपक्रमाय अभूत्। रामायण उपक्रमपदं तपः इति उपसंहारश्च प्रवर्धतामिति। एतयोः पदयोः सङ्घटनेन तपः प्रवर्धताम् इति संबद्धं वाक्यं रामायण तत्त्वार्थदायि। तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति ति तैत्तरीयकं भृगुवल्लीवचनं संस्मारयत्युत। वेदप्रतिपादकत्वं रामायणस्य तेन सुष्ठु निरूपितम्। तपस्मविनो मुनेः रामजपः सहकारि। तारकमन्त्रेम नामनामजपेन पूर्वावस्थातः तारितः ब्राह्मणव्याधः महामुनिः समजनि। एवं विश्वामित्रतपः, भगीरथतपश्चर्या भृग्वादीनां तप इत्येवं वर्मितं भवति तपश्चरणं तु तत्र तत्र।

धर्मो रक्षति रक्षितः। रामो विग्रहवान् धर्मः। परमात्मा पुरुषोत्तमश्च। करुणामूर्तिरयं मानुषत्वं भजन् देवकार्यं समाचरत्। धर्मोविग्रहवानधर्मविरतिं धन्वी स तन्वीतनः। करुणाकाकुत्स्थ इति दशावतारस्तोत्रे। भवतपनतापित भक्तजनभद्रा रामा इति महावीरवैभवे श्रीवेदान्तदेशिककृत श्रीरामवर्णनम्।

सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन।

रामो द्विर्नाभिभाषते

विदितः स हि धर्मज्ञः शरणागतवत्सलः। इत्यादिवचनैः शरण्यः सत्यसन्धः, धर्मवांश्च श्रीराम इति सम्यग् बोध्यते।

मङ्गलाशासनपरैः मदाचार्यपुरोगमैः। सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम्॥

इति शम्

**********

# श्रीमद्रामायणे मैत्रीधर्मः वालिप्रोक्तधर्माश्च

**म.श्री. श्रीकान्तः**

वि. वेदान्त विभागे उपचार्यः

श्री अहोबिलमठ आदर्श संस्कृत महाविद्यालयः

मधुरान्तकम्

श्रियः पतिः श्रीमन्नारायणः धर्मसंस्थापनार्थं लोके बहून् अवतारान् स्वीकृतवान् आसीत् इति श्रुतिस्मृतिइतिहासपुराणेषु प्रसिद्धमस्ति। तेषु प्रमुखतया दशावतारविषये एव अस्माकं दृष्टिः सर्वदा वर्तते। दशावतारविभागसमये आचार्यसार्वभौमः वेदान्तदेशिकोऽपि

**इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे**

**रक्षावामनरोषराम करुणाकाकुस्थ हेलाहलिन्।**

**क्रीडावल्लवकल्कवाहनदशा कल्किन्निति प्रत्यहं**

**जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः॥**

इति श्लोकमारचयत्। भगवान् श्रीमन्नारायणः संसारसागरे निमग्नानाम् अभिरक्षणार्थमेव अवतारं चकार। धर्मसंरक्षणं कर्तव्यम् इत्यतः केवलं श्रीवैकुण्ठे स्थित्वा, ततः धर्मपालनं न कृतम्। धर्मः कथं रक्षणीयः इति लोके प्रदर्शयितुं, स्वयं भूलोके अवतीर्य परमकारुणिकत्वेन जनानां हिताय धर्मसंरक्षणं स्वयमाचरितवान्। बहुषु अवतारेषु धर्मसंरक्षणं कृतं चेदपि, भगवान् श्रीमन्नारायणः त्रेतायां, **यः माम् एव शरणम् इति आयाति सः विरोधिश्चेदपि रक्षणीयः** इति शरणागतिधर्मप्रदर्शनार्थं श्रीरामचन्द्रमूर्तित्वेन अवतारं कृतवान्। **"अभयं सर्वभूतेभ्यः ददाम्येतत् व्रतं मम"** इति श्लोकः अत्र प्रमाणं भवति। श्रीमद्रामायणकाव्यनिर्माणसमये वाल्मीकिना-

**" चारित्रेण च को युक्तः सर्वभूतेषु को हितः । विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥"**

इति पृष्टस्य प्रश्नस्य समाधानवेलायां नारदमहर्षिणा किमुक्तम्?

**" इक्ष्वाकुवंशप्रभवः रामो नाम जनैः श्रुतः । नियतात्मा महावीर्यः द्युतिमान् धृतिमान् वशी ॥"**

इति इदमेव खलु प्रतिपादितम्। चारित्रेण युक्तः, सर्वभूतेषु हितः इत्युक्तम्। इदं गुणद्वयमपि श्रीरामचन्द्रस्यैव सम्भवति। यतो हि रामायणकालादारभ्य अद्यावधि, रामचन्द्रस्य प्रभावान् वयम्

अनुदिनं भाषामहे । लोके, चरित्रे कीर्तिमन्तः जनाः बहवः स्युः, परं ते सर्वभूतहितप्रवर्तकाः वा इति चेत् , न वयं आमिति वक्तुं समर्थाः । **पाषाणखण्डात् अहल्यायाः शापविमोचनसमये, एवं जगन्मातुः सीतायाः अग्निप्रवेशसमये, शबरीमोक्षसाक्षीभूतसमये, गुहसुग्रीवसख्ये, वालिसंहारे, विभीषणशरणागतौ, रावणयुद्धे च** भगवान् श्रीरामचन्द्रः धर्ममेव परिपालितवान्।

किञ्च **"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"** इति उक्तप्रकारेण रामायणं वेदोपबृंहणार्थं रचितं वाल्मीकिना । स्वयं कथ्यते च **"वेदस्य उपबृह्मणार्थाय"** इति । तथा च भगवान् श्रीमन्नारायणः श्रीरामचन्द्रमूर्तित्वेन अवतारं कृतवान् वेदः रामायणत्वेन परिणतो भूत्वा भूलोके भगवता सह अवर्तत । अत एव बुधाः रामायणपारायणकाले अमुं श्लोकम् इदानीमपि कथयन्ति -

**" वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥"**इति ।

अतः श्रीमद्भागवते- **"श्रीमत्कथाश्रवणकीर्तनचिन्तयेति"** इत्युक्तप्रकारेण सर्वदा रामायणचिन्तनेन, कीर्तनेन, श्रवणेन च वयं यदि स्मः, तर्हि अस्माकं जीवनस्य साफल्यं भवति । श्रीरामचन्द्रमूर्तेः कथाश्रवणेन, तस्योपरि मर्यादा प्रीतिश्च जायते । अस्य गुणः चारित्रं च तस्य कारणम्। **"बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते"** इति रामस्य विषये अयोध्यायाः जनाः उक्तवन्तः। अतः श्रीरामचन्द्रः **निरस्तसाम्यातिशयेन** निदर्शनभूतः अस्ति।

तथा च श्रीमद्रामायणे सर्वेषु अपि काण्डेषु शरणागतरक्षणाख्यः धर्मः प्रतिपाद्यते इत्यतः श्रीरामायणं शरणागतवेदः इत्यपि बुधाः आह्वयन्ति । **"अरिः प्राणान् परित्यज्य रक्षितव्यः कथञ्चन"** इति उच्यते। इत्थंभूतश्रीमद्रामायणे **मैत्रीधर्मः, वालिना प्रोक्ता धर्माश्च** इति शीर्षकद्वये मम व्यासम् उपस्थापयामि।

इदम् विषयद्वयमपि किष्किन्धाकाण्डे भवति । पितृवचनाश्रितदण्डकारण्यं, रावणापहृतां सीतां विचिन्वन्तं राममुद्दिश्य मध्येमार्गं कबन्धेन इदमुच्यते -

**श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः । भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥**
**स ते सहायो मित्रं च सीतायाः परिमार्गणे । भविष्यति महातेजः मा च शोके मनः कृथाः॥**

इति। मार्गे सुग्रीवाख्यवानरः सीतान्वेषणविषये भवतोः साहाय्यम् करिष्यति। अतः इक्ष्वाकुकुलशार्दूल ! **"भवितव्यं भवत्येव कालो हि दुरतिक्रमः"** इति उक्तवान् आसीत् कबन्धः।

महाभारतेऽपि उच्यते– **"विधिना यत् निर्मितम् तत् अनुभवितव्यमेव"** इति। उक्तञ्च – **"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि"** इति ।

अपि च कबन्धः श्रीरामम् दृष्ट्वा अवदत् - हे राम ! काल एव सर्वस्यापि कारणं भवति । अतः शोकं त्यक्त्वा इतः शीघ्रं सुग्रीवं द्रष्टुं गच्छ इति । ततः सीताधिगमार्थम् सुग्रीवं द्राक् दिदृक्षोः परमरमणीये प्रियविरहिततरुणजनमनोहरपटुतरबालपवनोन्मादिते पम्पातीरे सञ्चरतः दाशरथेः, वालिनिरस्तेन मतङ्गशापात् तदगम्यमृष्यमूकमधिवसता दावधूमशङ्कया वारिवाहभीतेन नीलकण्ठेनेव वालिप्रहितप्रणिधिभ्रमेण तस्माद् बिभ्यता सुग्रीवेण प्रेषितस्य हनुमतः श्रीरामचन्द्रस्य दर्शनम् प्रथमम् प्राप्तम्।

**वचो विज्ञाय हनूमान् सुग्रीवस्य महात्मनः । पर्वतात् ऋष्यमूकात् तु पुप्लुवे यत्र राघवौ ॥**
**कपिरूपं परत्यज्य हनूमान् मारुतात्मजः । भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः॥**

इति हनूमान् रामचन्द्रं दृष्टुं कपिरूपं त्यक्त्वा भिक्षुरूपं स्वीकृत्य जगाम । अथ हनुमान् आबभाषेऽथ **तौ वीरौ यथावत् प्रशशंस च** । इत्युक्तवत् मधुरं भाषमाणः आसीत् । शिक्षाव्याकरणादिसुसंकृततया ऐहलौकिकपारलौकिकबहुविध क्षेमावहैः इति भावः। यदाह भगवान् भाष्यकारः - **एकश्शब्दः सम्यक् ज्ञातः सुष्ठु प्रयक्तः स्वर्गे लोके कामधुग्भवति** इति । तादृशरीत्या व्यवहारः कृतः। हनूमान् रामलक्ष्मणयोः पूर्ववृत्तान्तादिकं सम्यक् ज्ञात्वा तौ महावीरौ सुग्रीवस्य समीपं नेतुम् उद्युक्तः आसीत्।

**करिष्यति स साहाय्यम् युवयोः भास्करात्मजः।**
**सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे॥**

इति सुग्रीवः अवश्यं भवतोः विषये साहाय्यं करिष्यति । आगच्छतां महावीरौ, मम स्कन्धम् आरोहताम् इति निवेदितवान् । तदुक्त्वा मारुतिः

**भिक्षुरूपं परत्यज्य वानरं रूपमास्थितः।**
**पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥**

इत्युक्तरीत्या तौ नीतवान् आसीत् । ततः सुग्रीवः हनूमतः वचनादिकं श्रुत्वा, श्रीरामस्य प्रभावादिकं सम्यक् ज्ञात्वा, अयमेव माम् वालिसकाशात् परिपालयिष्यति इति दृढविश्वासं कृतवान् । एवं रामोऽपि, रावणात् सीतायाः पालनकार्ये अयमेव मे साहाय्यं करिष्यति इति निश्चित्य तेन सह मैत्रीं कर्तुं प्रयतमानः बभूव। वेदान्तदेशिकेन उच्यते अस्मिन् विषये - **परस्परहितैषिणां परिसरेषु मां वर्तते** इति । सूर्यपुत्रस्य

परिवारादिकं दृष्ट्वा लक्ष्मणः इत्थम् अवदत् गुरुर्मे राघवस्सोऽयं सुग्रीवं शरणङ्गतः इति। रामस्त्वां शरणं गतः इति हनूमद्वचनस्य च परायत्तीकृतम् अस्वाधीनीकृतमित्यर्थः। तस्य च वशीकरणं तच्छरणागतिरेव इति भगवता श्रीभाष्यकारेण उक्तप्रकारेण सुग्रीवस्य सकाशे शरणागतिः आचरिता श्रीरामेण। लोकहिताय एवं कार्यं कृतवन्तम् श्रीरामचन्द्रं वयं सर्वदा उपास्महे इति बुधैः वचनमपि श्लोकरूपेण अस्ति।

स्वतन्त्रोपि शरण्योऽपि लोकसंभावनारतः।
सुग्रीवं शरणं यातः यस्तं रामम् उपास्महे ॥ इति ।

परस्परं साहाय्यं निरीक्षमाणौ तौ रामसुग्रीवौ अग्निमुखेन प्रतिज्ञां कृतवन्तौ।

विदितः स हि धर्मज्ञः शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि जीवितुम् इच्छति ॥

इति सीतादेव्याः वचनानुसारम् अत्रापि सुग्रीवः वालिभयात् जीवितुम् रामेण स्नेहम् चकार। सर्वजीवसंरक्षणार्थं आत्मानं मानुषम् मन्ये इति मानुषावतारं कृतवन्तः श्रीरामचन्द्रमीर्तिमहाभागाः सुग्रीवेण सह मैत्रिभावनां प्रदर्शितवन्तः इति।

द्वितीयं शीर्षकं भवति - वालिना प्रोक्तधर्मः

वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः ।
पितुः बहुमतो नित्यं ममापि च तथा पुरा ॥

इति सुग्रीवेण वालिविषये उक्तम् । वालिसुग्रीवयोः मध्ये युद्धस्य कारणं, कुतः वाली बलात्कारेण सुग्रीवं स्वदेशात् बहिः प्रेषितवान् इत्येतत् सर्वमपि रामस्य सकाशे अवोचत् सुग्रीवः। तत् श्रुत्वा रामेण " अद्यैव तं हनिष्यामि तव भार्यापहारिणम् " इति वालिसंहरणाय दृढसंकल्पः कृतः । एवं स्थिते अपि सुग्रीवस्य वालिपराक्रमे संपूर्णज्ञानस्य सत्वात्, रामस्योपरि अप्रतिहतविश्वासः न जातः । अतः कानिचन कार्याणि कृत्वा सुग्रीवे विश्वासम् उत्पादितवान् श्रीरामः । तस्मात् सुग्रीवः रामस्य वीरं दृष्ट्वा

" यथा हि तेजस्सु वरः सदा रविः यथा हि शैलो हिमवान्महाद्रिषु
यथा चतुष्पात्सु च केसरी वरः तथा नराणामसि विक्रमे वरः ॥ "

इति प्राञ्जलिपूर्वकं निवेदितवान् । ततः सिंहगर्जनेन वालिनं युद्धार्थम् आहूतवान् आसीत् सुग्रीवः । वाली अपि अस्य सुग्रीवस्य गर्वभङ्गः करणीयः इति धिया तारायाः सद्वार्त्तां अश्रुत्वैव युद्धार्थं समुपागतः । तदा वृक्षस्य पृष्ठतः स्थित्वा श्रीरामचन्द्रः वालिनं पराङ्मुखवधं कृतवान् ।

**" ततस्तेन महातेजा वीर्योत्सिक्तः कपीश्वरः । वेगेनाभिहतो वाली निपपात महीतले ॥**

**" अथोक्षितः शोणिततोयविश्रवैः सुपिष्पिताशोक इवानिलोद्धतः ।**

**विचेतनो वासवसूनुराहवे विभ्रंशितेन्द्रध्वजवत् क्षितिं गतः ॥**

इति भूमौ वाली निपतितः इति वाल्मीकिना उच्यते ।

अधः निपतितः वाली भगवन्तं दृष्ट्वा धर्मसंहितं वाक्यमुक्तवान् आसीत् । लोके रामायणं संपूर्णतया अज्ञात्वा जनाः रामस्योपरि वालिना निन्दा कृता इति वदन्ति । परम् – यदि वयं वाल्मीकिरामायणं सम्यक् पश्यामः तदा अस्माभिः ज्ञायते यत् – वालिना रामं दृष्ट्वा स्तोत्रमेव कृतम् इति । लोकजनेभ्यः रामस्य वैशिष्ट्यं प्रदर्शयितुं निन्दारूपं प्रश्नं कृत्वा रामः धर्मज्ञः इति निरूपितवान् । ततः हे राम इति आहूय सः इत्थम् अवदत् –

**" न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति । इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ "**

इति अदर्शने स्थित्वा अधर्ममार्गे किमर्थं प्रवर्तितवान् । अयोध्यायाः वंशे भवतः जन्म कथमायातम् । " **सतां वेषधरं पापं प्रच्छन्नमिव पावकम्** " इति रामं कपटवेषधारी इति निन्दितवान् । किञ्च हे राम, भवान् राजकुले प्रसूतः, धर्मवान् इति विश्रुतः, अभव्यः, भव्यरूपेण किमर्थं परिधावसि । अपि च त्वं दशरथस्य पुत्रः, प्रियदर्शनः प्रथितः, भवान् धर्मसंहितो दृश्यते । एवं हे राम ! वयं वनेचराः मृगाः, मूलफलाशनाः । अस्माकम् एषा एव प्रकृतिः। त्वं तु नरेश्वरः पुरुषः भवति इत्यतः आवयोः मध्ये महान् भेदः वर्तते । इत्थं भेदे सति आवयोः मध्ये युद्धम् कथं वा आरब्धम् ? । लोके द्वयोः विरोधाय भूमिः, हिरण्यं, रूप्यं इत्येतानि एव कारणानि भवन्ति । परम् अस्मिन् वने तव लोभः कः ? मदीयेषु फलेषु वा ? । कारुण्यं तु राजगौरवं भवति । हे काकुत्स्थ ! अनापराधिनम् मां कुतः बाणेन हतवान् ? । राजहन्ता, ब्राह्मणहन्ता, गोघ्नः, चोरः, प्राणिवधे रतः, नास्तिकः, परिवेत्ता इत्यादीनां पुरुषाणां नरकप्राप्तिः उक्ता वर्तते । हे राम ! अन्यदपि अस्ति यत् एतत् सर्वमपि मया सोढुं शक्यते, किन्तु पराङ्मुखवधः यः त्वया आचरितःसः मया सोढुं नैव शक्यते इत्युक्त्वा वालिना भाषणं समापितम् ।

इदं सर्वं श्रुत्वा भगवान् श्रीरामः वालिनम् अब्रवीत् – लोकविषयान्, सकलपुरुषार्थांश्च अज्ञात्वा त्वं विगर्हसे । भवता पृष्टस्य प्रश्नस्य एकैकस्यापि समाधानं वक्तुम् इच्छामि –

**" इक्ष्वाकूणाम् इयं भूमिः सशैलवनकानना । मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि ॥ "**

इति उक्त्वा समुद्रपर्यन्तं अस्माकं क्षेत्रमेव । अस्माकं राज्यशासने अन्तर्भवत्येव सर्वम्। मम पिता भ्रात्रे भरताय अयोध्याया: शासनाधिकारम् प्रदाय मह्यं वनशासनं कर्तुम् आज्ञप्तवान् आसीत् । अत: वयं तु इक्ष्वाकुवंशप्रभवा: भरताज्ञां पुरस्कृत्य यथाविधि धर्मम् आचराम: इति । किञ्च

**'' ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया: धर्मे वर्त्मनि वर्तिन: ॥''**

इति यथा ज्येष्ठभ्राता पितृवत् ज्ञेय: इति अस्ति , तथैव कनिष्ठभ्राता अपि पुत्रवत् परिपालनीय: इति अपि उक्तम् अस्ति । परम् त्वया किं कृतम् ? । तव कनिष्ठभ्राता देशात् दूरीकृतः , तस्य भार्यापि अपहृता ।

किञ्च भवता किमुक्तं, अहम् वानरः, वानराणां प्रकृति: अन्या इति । भवान् वानरवेषे विद्यमान: पुरुष: ।

**'' औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य य: ।**
**प्रचरेत नर: कामात् अस्य दण्डो वध: स्मृत: ॥**

इति दुहिता, सहोदरस्य पत्नी, सपत्नीमाता, आचार्यस्य पत्नी, स्नुषा एवं सहोदरी च इत्येताभि: सर्वाभि: सह, येन कामः आचर्यते, तस्य दण्डः वध: एव इत्युक्तम् शास्त्रे। अनन्तरं पराङ्मुखवधं किमर्थं कृतवान् आसीत् इति ज्ञायतां प्रथमम् - '' प्रजानां च हिते रत: ''अहम् । अतः यदि अहम् साक्षात् आगत्य त्वया सह युद्धम् करिष्यामि तर्हि भवान् प्रथमं न साक्षात् आगमिष्यति, भवत: सैन्यं प्रेषयिष्यति । मदर्थं अवतारं कृतवन्त: इमे वानरा: '' देवा: वानरत्वम् उपागता: '' । अत: तान् हन्तुं नेच्छामि । तस्मात् मम 'रामःपराङ्मुखवधं कृतवान् ' इति अपमानं लोके भविष्यति चेदपि प्रजानां हिताय इदं मया आचरितम् इति भगवता रामेण समाहितम् ।

**'' न दोषं राघवे दध्यौ धर्मेति गतनिश्चय: । प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वर: ॥''**

इति रामं दृष्ट्वा वालिः , भवता यद्यद् आचरितं तत् सर्वं धर्ममर्गे भवत्येव '' रामो विग्रहवान् धर्म: '' इति उक्त्वा श्रीरामचन्द्रमेव शरणं गत: ॥

शुभम्

# श्रीमद्रामायणे सुन्दरकाण्डे रावणाय सीताकर्तृकोपदेशः

**स. सुदर्शनः**

उपाचार्यः, न्यायविभागः

श्रीमदहोबिलमठीयादर्शसंस्कृतमहाविद्यालयः,

मधुरान्तकम्

**"वेदोऽखिलो धर्ममूलम्"** इत्युक्तेः, धर्मस्य समग्रस्य मूलमस्ति वेदः इति ज्ञायते। **"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"** इति सूक्त्यनुसारम् अशेषधर्ममूलको वेदः, रामायणादि इतिहासपुराणाभ्यां निर्णीतार्थको भवति। श्रीमद्रामायणे श्रुतिस्मृतिसिद्धार्थाः तत्तत्प्रसङ्गे निरूपिताः वर्तन्ते। तत्र सुन्दरकाण्डे रावणाय सीताकर्तृकोपदेशः पत्रेऽस्मिन् संगृह्यते। सुन्दरकाण्डे सर्वेऽपि विषयाः रमणीयाः। अत एवोक्तम्-

**सुन्दरे सुन्दरी सीता,सुन्दरे सुन्दरी कथा।**

**सुन्दरे सुन्दरी लङ्का सुन्दरे किं न सुन्दरम्** ॥ इति।

सुन्दरकाण्डे सत्स्वपि नानासर्गेषु रावणाय सीताकर्तृकोपदेशः विंशे एकविंशे च सर्गे प्रधानतया प्रतिपादितोऽस्ति। यतः **"साकारैः मधुरैर्वाक्यैन्यदर्शयत रावणः"**(स-20-श्लो-1) इत्युक्तप्रकारेण सीतायाः मनःपरिवर्तनार्थं मोहपीडितेन रावणेन यानि वचनानि प्रोक्तानि विंशे सर्गे, तेषां सर्वेषां प्रतिवचनं धर्ममूलकं, स्मृतिसंमतं च सीतया एकविंशे सर्गे दत्तमस्ति।

तत्र अधार्मिकरावणाय स्मृतिप्रमाणमूलकः यः उपदेशः सीतया कृतः सः इतः निरूप्यते। सीता सर्वलोकस्यापि जननी, तस्याः केषामप्युपरि द्वेषः नास्ति। सर्वेऽपि लोकस्थाः तस्याः वत्ससदृशाः एव। तथापि वत्सेषु अन्यतमः दुष्टश्चेत् तस्य स्वोपदेशेन समीकरणं मातुः कार्यम् इति मत्वा सीता रामगुणान् श्रावयित्वा सर्वलोकशरण्यं श्रीरामचन्द्रं मित्रं कर्तुम् उपदिशति।**"हितं मनोहारि च दुर्लभं वचः"** इति वचनात् रावणस्य हितं सीता उपदिशति। परन्तु सः उपदेशः तस्य मनोहरः नासीदिति श्लोकानां विवरणेन ज्ञायते।

रावणस्य सर्वाणि वचनानि श्रुत्वा आर्ता दीनस्वरा इयं सीता **तृणमन्तरतः कृत्वा प्रत्युवाच।**

रावणायोपदेशात् प्राक् पुरतः तृणं संस्थाप्य वाग्व्यवहारम् आरब्धवती। अनेन साक्षात् , परम्परया वा नानोपदेशः कृतः। आदौ स्ववाक्चातुर्येण धनादिना वा सीता प्राप्तुं शक्या इति धिया रावणकृतव्यवहारः, रावणस्य ऐश्वर्यादिकं सर्वं च मह्यं तृणतुल्यम् इति भावनया तृणस्थापनं कृतवतीति इति स्वीकर्तुं शक्यते।

एवम् **"आसनमुदकं देयम्"** इति आपस्तम्बसूत्रम् (2-4-1) अस्ति। राजा समागतश्चेत् तस्मै आसनोदकादिकम् आदौ देयमित्यस्ति। उपवेशनार्थम् आसनं नास्ति चेत् **"तृणानि भूमिरुदकम्"** इति वाक्यानुसारं तृणानि वा आसनतुल्यतया स्थापनीयानि इति शास्त्रमनतिक्रम्य, रावणः राक्षसः पीडकश्चेदपि तस्मै तृणासनं प्रायच्छत्। तच्चासनं कदाचित् तं परिवर्तेत इति च भावना अत्र योजनीया।

एवं यथा रघुवंशे इन्दुमती, स्वयंवरे सख्या सुनन्दया प्रशंसितपरन्तपविषये सर्वं श्रुत्वा अन्ते तुच्छतया अर्थान्तरद्योतकतया स्वारुचिप्रदर्शनपरतया एकं नमस्कारं कृतवती, तथा रावणस्य 'त्वयि मे आसक्तिर्नास्ति, भवान् गन्तुमर्हः' इति सूचनार्थं वा तृणं स्थापितवती इत्यर्थः स्वीकर्तुं शक्यः।

एवं यथा भोजनारम्भवेलायां कृमिकीटकानसंबन्धयितुं परितः जलेन सेचनं क्रियते तथा स्वानभिमतं रावणमसंबन्धयितुं, पृथक्कर्तुं वा तृणं स्थापितवती इयं सीता। अत्र तु शिष्टवचनमपि प्रमाणमस्ति **"स्तम्भेन सलिलेन वा पङ्क्तिभेदोभिजायते"** इति। अत्र स्तम्भशब्देन तृणमप्युपलक्षितम्।

इतः रावणेन विंशे सर्गे उक्तानां वचनानां समाधानतया, धर्मबोधकतया, च रावणस्य मनःपरिवर्तनाय सीतया कृतोपदेशः प्रश्नोत्तररीत्या , संवादरूपेण वा परिगृह्य संगृह्य विचार्यते।

**रावणः–** **स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः।**
**गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा॥** (सु-स-20, श्लो-5)
**भव मैथिलि भार्या मे मोहमेनं विसर्जय।**
**बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव॥** (सु,स-20,श्लो-16)

इति श्लोकद्वयेन , नरसिंहभूतयोः भ्रात्रोः रामलक्ष्मणयोः अनुपस्थितिकाले आश्रममनुप्रविश्य अपनयनं कथं युक्तम् ? इति सीतायाः मनस्थशङ्कां निवारयति रावणः। तथा च अपहरणं राक्षसधर्म एव, अतः मां विवाह्य ममाग्रराजमहिषी भव इति रावणः मोहपीडितः सन् प्रार्थयति। अत्र मनुस्मृतिवचनमपि प्रमाणम् अस्ति यत् –

**हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात्।**
**प्रसह्य कन्याहरणं राक्षसोविधिरुच्यते॥** (मनु, अध्या-3,श्लो-33) इति

**सीता–**

रावणकृतदुष्प्रवृत्तिप्रार्थनां सदुपदेशेन निराकरोति सीता इत्थम् - कन्यायाः हरणं राक्षसधर्मः एव, परं नाहं कन्या, किन्तु रामभार्या। अतः कथमपि भवता सह मम विवाहः अयुक्त एव। भार्यारक्षणं पुरुषलक्षणं तत्तु रामरावणोभयसाधारणम्। किञ्च स्वराज्यसंबन्धिस्त्रियः रक्षणं राजधर्मः। तं धर्मं मनसि निधाय, भवत्पत्नीषु कृतमनोरथो भव इति। तदेवोक्तम् -

**नाहमौपयिकी भार्या परभार्या सती तव। साधुधर्ममवेक्षस्व साधु साधुव्रतं चर ॥**
**यथा तव तथान्येषां दारा रक्ष्या निशाचर। आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम्॥**

(सु,सर्ग-21,श्लो-6,7) इति।

तथाच परदारगमनं, परकलत्रवर्णनं, परभार्योपसेवनमित्यादिकार्याणि नरकसाधनभूतानि इति धर्मः सीतयोपदिष्टः। **रावणः-**

सीतायाः सौन्दर्येण मोहितः रावणः चपलेन्द्रियः सन् स्वं जेतुं प्रतिबलः चराचरेषु सुरासुरेषु कोऽपि नास्ति इति अहङ्कारेण व्यवहरति इत्थं -

**यद्यत् पश्यामि ते गात्रं शीतांशुसदृशानने।**
**तस्मिंस्तस्मिन् पृथुश्रोणि चक्षुर्मम निबध्यते॥** (सु,सर्ग-20,श्लो-15)
**नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत्।**
**पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥** (सु,सर्ग-20,श्लो-19)

**सीतोपदेशः–**

यः स्वदारेष्वनासक्तः, परदारेषु मोहयुक्तः, स्वेन्द्रिनिग्रहासमर्थः,सः स्वयमेवापत्पदमाप्नोति। असाध्यमपि साधितुं शक्यम् इन्द्रियनिग्रहेण। साधितं सर्वं नश्यति चलितेन्द्रियेण। अतः परदारापहरणं, अजितेन्द्रियत्वं अहङ्कारादिकं च स्वस्य स्वकुलस्य च नाशायैव भवतीति। तदाह -

**अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम्।**
**नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥** इति।

अनेन इन्द्रियाणां जयः राज्ञः प्रधानधर्मः इत्युपदिष्टम्। अत्र स्मृतिसंमतिरप्यस्ति--

**इन्द्रियाणां जये योगं समातिष्ठेदिवानिशम्।**

जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः॥ (मनु-7 अध्या-44श्लो) इति।

राजा यत्नतः चक्षुरादीनां इन्द्रियाणां विषयासक्तिवारणे सर्वकालं यत्नं कुर्यात्। जितेन्द्रियः राजा एव जनान् नियन्तुं पोषितुं , पालयितुं वा शक्नोति इति।

रावणः –

नानविध-ऐश्वर्यमदमत्तः रावणः, रत्नौघसंकुला लङ्का, लङ्कायाःपतिरहं, मम तु प्रियपात्रभूता त्वम् इति सीतां ऐश्वर्यादिना तोषयितुं यत् वचनम् अवदत् , तस्य प्रतिवचनेन उपदिशति सीता इत्थम् -

अकृतात्मानमासाद्य राजानमनये रतम्।

समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च॥ ( सु,सर्ग-21,श्लो-11)

यस्य देशस्य राजा अधर्ममार्गचरः सः देशः समग्रः अशेषश्च नष्टः भविष्यति। अतः देशरक्षनार्थं वा सन्मार्गे प्रवर्तयितुं सूचयति। अयमेव विषयः मनुनापि प्रकीर्तितःवर्तते इत्थम् -

अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम्।

हिंसारतश्च यो नित्यं नेहासौ सुखमेधते॥ (मनु-4अध्या-170श्लो)

अयं च राजधर्मप्रतिपादनपरतया मनुना विवक्षितः। अधर्मेण व्यवहरतीति अधार्मिकः। शास्त्रनिषिद्ध- अगम्यागमनादि- अनुष्ठाता यो मनुष्यः, सः इहलोके सुखसमवेतो न भवति इति निन्दया निषेधः कृतः। अतः अधर्ममार्गे प्रवृत्तिं त्यक्त्वा सन्मार्गे धर्मपरतया प्रवर्तयितुं सीतया उपदेशः रावणाय कृतः। एवं शीलं, वयः, सौन्दर्यं, वर्णः इत्यादिना युक्तैः सजातीयैरेव परस्परसंबन्धः करणीयः इति उपमया उपदिशति सीता -

अहमौपयिकी भार्या तस्यैव वसुधापतेः।

व्रतस्नातस्य विप्रस्य विद्येव विदितात्मनः॥ (सु,सर्ग-21,श्लो17)

यथा स्नातकव्रतविशिष्टस्य ब्राहमणस्य योगाभ्यासादिविद्या उचिता, योग्या, सफला,च तथैवाहं (सीता) **"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ"** इति श्रुत्युक्तप्रकारेण भुवनस्य गोप्तुः श्रीरामचन्द्रस्यैव भार्या भवितुमर्हा इति उपदिशति। अत्रापि स्मृतिप्रमाणमस्ति -

उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह।

निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्॥ (मनु,4अध्या-244श्लो.)

एवं परपुरुषस्नेहः स्त्रीभिः सुतरां त्याज्यः इत्यमुमुपदेशं रावणस्याकरोत् सीता। तद्यथा–

**न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत्। अकार्यं न मया कार्यमेकपत्न्या विगर्हितम्॥** इति।

अहं तु उत्कृष्टविदेहवंशे जाता, पुण्यकुले रघुवंशे विवाहिता। अतः पतिव्रताधर्मः मम प्राणभूतः। तेन महापातककार्यं पुरुषान्तरसंबन्धरूपं कथमपि मनसापि न चिन्तयामि इति। अत्र पुरुषान्तरसंसर्गः निन्द्यः इत्यत्र स्मृतिरप्यस्ति -

**व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।**

**सृगालयोनिमाप्नोति पापरोगैश्च पीड्यते ॥ (मनु, 9अध्या-30श्लो)** इति।

या स्त्री परपुषं सेवते , सा अस्मिन् जन्मनि निन्दामाप्नोति, जन्मान्तरे सृगालजातिविष्टं जन्म च आप्नोति। अतः पतिव्रताधर्मः अनिवार्यः।

एवं नानाप्रकारेण मृदुभाषणेन रावणम् उपदिश्य किञ्चित्कटुकभाषणेन सह सीतादेवी प्रसङ्गात् शरणागतितत्त्वमप्युपदिशति। तद्यथा-

**मित्रमौपयिकं कर्तुं रामःस्थानं परीप्सता।**

**वधं चानिच्छता घोरं त्वयासौ पुरुषर्षभः॥ (सु,सर्ग21,श्लो19)**

राज्ञः स्वजनपरिपालनं धर्मः। अहमपि (सीता) रामसंबन्धिजनान्यतमा। अतः मम रक्षणार्थं भवतः घोरवधमपि कर्तुं समर्थं श्रीरामचन्द्रं मित्रं कर्तुं प्रवर्तताम्।

**विदितः स हि धर्मज्ञः शरणागतवत्सलः।**

**तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ (सु,सर्ग 21,श्लो 20)**

**प्रसादयस्व त्वं चैनं शरणागतवत्सलम्।**

**मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥ ( सु,सर्ग 21,श्लो 21)**

अत्र रामस्य मित्रभावनायां तीव्रेच्छा अस्ति। अतः एव रामेणैवोक्तम् - **"मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन"** इति। अतः रामस्य तद्वचनम् अनुसृत्यैव सीतया उपदेशः अत्र विहितः। तथैव भवान् (रावणः) मित्रबान्धवैः सह सुखजीवनमिच्छति चेत् श्रीरामचन्द्रं शरणं व्रज मां च रामसन्निधौ समर्पय। इदमेव त्वत्कृता- पराधस्य प्रायश्चितम्। शरणागतं त्वां रामः रक्षेन्नवेति लेशतोऽपि संशयो मास्तु ते। यतः अनुकूलबुद्धिमात्रेण सर्वं हितं करोति रामः।

शरणागतिधर्माश्च –

1. आनुकूल्यस्य सङ्कल्पः।
2. प्रातिकूल्यस्य वर्जनम्।
3. रक्षिष्यतीति महाविश्वासः।
4. कार्पण्यम्।
5. गोप्तृत्ववरणम्।
6. आत्मसमर्पणम्।

इति षड्विधाः भवन्ति। तादृश शरणागतिं कर्तुं सीतयोपदेशः कृतः। यथा काकासुरः, सुग्रीवः, गुहः, इत्यादिबहवः मित्रभूताः शरणागताः, तान् सर्वान् रामः रक्षितवान्। तेषां समूहे त्वपि भवितुं यतस्व इति।

रावणः-

एवं रामपराक्रमम् अजानन् अविवेकी रावणःपूर्वं किञ्चित् उक्तवानासीत्।

न रामस्तपसा देवि ! न बलेन न विक्रमैः।

न धनेन मया तुल्यस्तेजसा यशसाऽपि वा ॥ (सु,सर्ग20,श्लो34) इति।

बहुप्रकारेण प्रेरणां कृत्वापि सीता स्ववैराग्यस्य चलनमपि न कृतवती इति मत्वा स्वस्योत्कर्षं ,रामस्य न्यूनतां च प्रतिपादयितुम् इदं वचनं रावणेन प्रयुक्तम्। तपोबलेन प्राप्तसर्वायुधोऽहं , रामस्तु कोदण्डमात्रधरः, बलेन इन्द्रकुबेरादीन् सर्वानपि जितवानहम्, एवं धनेन, तेजसा यशसा वा, सर्वाङ्गेन विशिष्टोऽहम्। अतः चीरवाससं , वनगोचरं , स्थण्डिलशायिनं रामं, जीवति वा न वा इति संदेहार्हं च रामं मनसापि मा चिन्तय। यतः "ममहस्तात्त्वां न प्राप्तुमर्हति राघवः"(सु,सर्ग20,श्लो28)इति स्ववचनं पुनर्निगमयति रावणः।

सीता –

स्वपराक्रमाहङ्कारयुक्तं रावणम् उपमया, पूर्ववृत्तान्तदृष्टान्तेन च साधुं कर्तुं पुनः प्रवर्तते इयं सीता।

तद्यथा –

राक्षसेन्द्रमहासर्पान् स राम गरुडोमहान्।

उद्धरिष्यति वेगेन वैनतेय इवोरगान् ॥(सु,सर्ग21,श्लो27)

अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिन्दमः।

असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥ (सु.सर्ग21,श्लो28)

रामगरुडः राक्षससर्पान् निर्मूलं हनिष्यत्येव। यथा असुरेभ्यो नीतां श्रियं विष्णुः त्रिभिः पद्भिः परिगणय्य रक्षितवान् तथा मद्भर्ता श्रीरामचन्द्रोऽपि त्वत्पराक्रमाहङ्कारादीन् दूरीकृत्य माम् अवश्यं रक्षत्येव इति साभिमान्म् उक्तवती।

## निगमनम्

तथा च "श्रीमद्रामायणे सुन्दरकाण्डे रावणाय सीताकर्तृकोपदेशः" इति विषये मनुस्मृत्यनुगुणं विद्यमानानां विषयाणां सङ्ग्रहः एतावता कृतः। ते च भवन्ति –

1. कन्याहरणं राक्षसधर्मश्चेदपि परभार्याहरणं न कर्तव्यमिति।
2. परदारोपसेवनं न कर्तव्यमिति।
3. राजा जितेन्द्रियः भवेत् , चलितेन्द्रियः न भवेत् इति।
4. अधार्मिकः कदापि न सुखमेधते इति।
5. अकार्यं न कर्तव्यं , विवाहः समयोरेव शोभते इति च।
6. भर्तुः व्यभिचारात् लोकानिन्दाप्राप्तिरिति।
7. कृतपापस्याऽपि अन्तिमः रक्षणोपायः शरणागतिरेव इति।

इत्येवं रीत्या बहुप्रकारेण रावणाय सीतया उपदेशः कृतः आसीत्।परन्तु इदं सर्वं रावणेन न गृहीतम् इति कारणादेव रावणस्य बान्धवाः, सैन्यादिकं, कीर्तिः, यशः, धनं, राज्यं, अन्ततः स्वस्य प्राणोऽपि इति सर्वं विनष्टम् आसीत्। अतः इतिहासपुराणानाम् उपदेशे श्रद्धां दत्त्वा, कर्तव्याकर्तव्यविवेकज्ञानं संप्राप्य वयं नितरां सुखमनुभवामः।

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥

# विश्वामित्रवसिष्ठयोः धर्मविचारः

**C. Venkatesan.** M.A., M.Phil.,
Asst.Prof. in Sanskrit,
Rajah's College, Thiruvaiyaru.

कुशः नाम प्रजापतिः ब्रह्मणः आज्ञया भूलोके प्रजासृष्टिकर्म चकार । अयं विदर्भदेशराजकुमारीं परिणीय राज्यमेकं स्थापयामास। अस्य चत्वारः पुत्राः अजायन्त । तेषु कुशनाभाख्यः अन्यतमः पुत्रकामेष्टिं यष्ट्वा गाधिनामानं पुत्रमलभत। गाधेः सत्यवती इति प्रसिद्धा कुमारी अजायत । भृगुमहर्षेः पौत्रः ऋचीकः सत्यवत्याः सौन्दर्येण आकृष्टः, गाधिराजम् आसाद्य तां स्वस्मै दातुं प्रार्थयत । गाधिराजोऽपि एकपुत्रीं ताम् ऋषये तस्मै दातुं विमनाः जातः। तथापि सः ऋषेः पुत्रस्य प्रार्थनां तिरस्कर्तुम् अशक्तः कमपि नियमं विज्ञापयामास। तत्र क्षत्रियकुमार्याः अस्याः विवाहाय यः श्वेताश्वानां सहस्त्रं कन्याशुल्कत्वेन ददाति तस्मै इयं दीयेत – इति पूर्वमेव निश्चितम् । यदि तदनुगुणं भवता प्रयत्नः क्रियते, तर्हि दास्यामि मम पुत्रीमिति। ऋचीकोऽपि वरुणात्तादृशम् अश्वसहस्त्रं प्राप्य गाधिने दत्वा तस्य पुत्रीं परिणीतवान्।

ऋचीकस्य पितामहः भृगुमहर्षिः सत्यवत्यै वरमेकम् अन्वगृह्णात् । तस्य प्रभावेन सत्यवत्याः जमदग्निः क्षत्रियश्रेष्ठः अजायत । एवं तस्याः मातुरपि तेनैव प्रभावेन कौशिको नाम क्षत्रियः अजायत । स एव कौशिकः ब्रह्मर्षिपदवीं प्राप्य गायत्रीमन्त्रं साक्षात्कृत्य लोकाय उपदिदेश।

**वसिष्ठस्य आतिथ्यधर्मः –**

राजर्षिः विश्वामित्रः एकदा स्वचतुरङ्गसैन्यसहितः वसिष्ठस्य आश्रमं गतः। एकदा राजर्षिः विश्वामित्रः सामात्यप्रमुखः ससैन्यः वनं गच्छन् वसिष्ठस्य आश्रमपदं प्राप । तपोवरिष्ठः गरिष्ठः ब्रह्मर्षिः, विश्वामित्रम् अतिथिसत्कारेण स्वागतं चक्रे । कुशलप्रश्नानन्तरं भगवान् वसिष्ठः विश्वामित्रं भोजनाय आमन्त्रयामास। विश्वामित्रः आश्रमवासिनं ब्रह्मर्षिं लघुमन्यमानः कथं भवद्भिः सपरिवारस्य मम वनेऽस्मिन् पानभोजनादिव्यवस्था कर्तुं शक्यते । तस्मादलं वचसा, सत्कारेणैव सन्तुष्टः गन्तुमनुमन्यतामिति प्रार्थयामास। आतिथ्यमवश्यं कर्तव्यमिति भृशं वदन् वसिष्ठः विना क्लेशं भोजनव्यवस्था क्रियते, स्वीकृत्यैव गच्छन्तु इति प्रार्थयामास। विश्वामित्रः प्रार्थनां निराकर्तुमशक्तः कथमपि अङ्गीचकार।

वसिष्ठः यागयज्ञादिकरणे सहायभूतां नन्दिनीं दिव्यां गां भोजनव्यवस्थायै समादिदेश। सापि स्वदिव्यशक्त्या सर्वेभ्योऽपि षड्रसोपेतं चतुर्विधान्नजातं झटिति समाकलय्य यस्मै यद्यद्रोचते तं तेन तर्पयामास।

नन्दिन्याः सत्कारेण संप्राप्तपरमानन्दः विश्वामित्रः वनवासिने वसिष्ठाय प्रभूतशक्तिमती इयं कामधेनुः अल्पप्रयोजिका, परं राजर्षये स्वस्मै प्रजारक्षणपराय बहुधा प्रयोजिका स्यात् इति मत्वा स्वस्मै तां दातुं वसिष्ठं निर्बबन्ध –

**"रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः। तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज"** ॥ इति ।

परं वसिष्ठः, इयं गौः मया विना अन्यं न सेवते इत्याह । किञ्चैवं पौनःपुन्येन तिरस्कारेण अवमानितः विश्वामित्रः स्वबलेन गां नेतुं सबलम् आकृष्टवान् । तदा नन्दिनी वसिष्ठं प्राप्य आत्मरक्षणाय प्रार्थयामास। तां वसिष्ठः एवम् उवाच – अयं राजर्षिः प्रजारक्षणे तत्परः सर्वेषामपि रत्नानामधिपतिः इति वदन् त्वां दातुं मां प्रार्थितवान् । परं तस्य प्रार्थना न मया अङ्गीकृता । अतः दौष्ट्येन त्वां नेतुम् इच्छति सः। अबलोऽहं किमपि कर्तुमशक्तः। परं न मया त्वं त्यक्ता। तस्मात् स्वस्य रक्षणं स्वयमेव कुर्याः इति स्वस्य अशक्ततां प्रकटयामास।

तदा नन्दिनी हुङ्कारेणैव पल्लवान् , यवनान्, शकान्, कम्भोजान् असृजत् । विश्वामित्रः सर्वान् अस्त्रैः नाशयामास। विश्वामित्रस्य पुत्राः नन्दिन्या कृतं स्वसैन्यनाशं दृष्ट्वा योद्धुमागताः। तत् दृष्ट्वा महानृषिः वसिष्ठः हुङ्कारेणैव सर्वान् पुत्रान् अदहत् । तेन विश्वामित्रः एवमभूत् –

**"समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः। उपरक्तः इवादित्यः सद्यो निष्प्रभतां गतः॥**

**हतपुत्रबलो दीनो लूनपक्ष इव द्विजः । हतदर्पो हतोत्साहो निर्वेदं समपद्यत"** ॥ इति ।

विश्वामित्रोऽपि दिव्यास्त्रैः स्वैः वसिष्ठाश्रमं वह्निसात् अकरोत्। तदा वसिष्ठः स्वब्रह्मदण्डं पुरतः संस्थाप्य विश्वमित्रप्रेरितास्त्रान् निर्बलान् कारयामास । ततः प्रतिहर्तुम् अशक्तः विश्वामित्रः-

**"धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्"**।

इति चिन्तयन् ब्रह्मत्वप्राप्त्यै तपः कर्तुं मनश्चकार ।

**शरणागतरक्षणम् –**

शरणागतरक्षणधर्मः उत्कृष्टः भवति । एकदा रघुवंशीयः त्रिशङ्कुः राजा तपोबलविशिष्टं वसिष्ठं स्वशरीरेण स्वर्गलोकगमनेच्छया, तदर्थं यष्टुं प्रार्थयामास। वसिष्ठः तस्य प्रार्थनां निराचकार।

सोऽपि एवं स्वगुरुणा निराकृतः स्वेच्छां पूरयितुं गुरुवचनम् अनादृत्य गुरुपुत्रान् प्रार्थयामास । तेऽपि गुरुविश्वासघातिनं तं पुनः पुनः प्रार्थयन्तं निराकृतवन्तः। किञ्च 'चण्डालो भव' इति ते शप्तवन्तः ।

तथापि सः स्वमनःप्रवृत्तेः अविरतः विश्वामित्रं शरणं गतः। विश्वामित्रोऽपि स्वार्जितेन सर्वतपःफलेन यज्ञमारभ्य सर्वान् देवान् यज्ञभागस्वीकरणाय आमन्त्रयामास। तस्य अकार्यं ज्ञात्वा सर्वे देवाः नागताः। तथापि सः चापल्यात् अविरतः तपोबलेन स्वशरीरेण त्रिशङ्कुं स्वर्गम् अरोहयामास। सेन्द्राः देवाः सशरीरेण स्वर्गम् आगच्छन्तं त्रिशङ्कुं अधःशिरसं कृत्वा भुवम् अपातयन् । 'गुरो मां रक्षस्व रक्षस्व' इति वदतः तस्य आक्रोशं श्रुत्वा विश्वामित्रः 'तिष्ठ तिष्ठ' इत्युक्त्वा द्यावापृथिव्योः अन्तराले स्वर्गमन्यम् अकल्पत् । अन्यम् इन्द्रादिकमपि स्रष्टुम् उद्युक्तस्य विश्वामित्रस्य अकृत्यं ज्ञात्वा तं वारयितुं तस्य सकाशं देवाः प्रापुः। परं विश्वामित्रः शरणागतस्य तस्य मनोऽभीष्टपूरणे कृतं स्वसङ्कल्पं प्रतिज्ञाय नक्षत्रमण्डलस्य मध्ये स्थानमेकं प्रकल्प्य तत्र त्रिशङ्क्वर्थं स्वर्गमन्यं निर्ममे । तदेव त्रिशङ्कुस्वर्ग इति अधुनापि व्यवह्रियते ।

अनेन शरणागतरक्षणधर्मः, गुरुवचनोल्लघनं न कार्यमिति धर्मश्च ज्ञायते।

**प्रजापरिपालनधर्मलोपे राज्ञः दोषप्रवृत्तिः –**

कश्चित् ब्राह्मणः अयोध्याधिपतिम् अम्बरीषं समासाद्य - हे राजन् तव शासने दोषात् केनापि यज्ञपशुः अपहृतः । तेन अधर्मः सञ्जातः। यत्र देशे राजा पशुरक्षणं न करोति, तत्र अनेके दोषाः संभवन्ति इत्याह । अत्र

**" अरक्षितारं राजानं हन्ति दोषो नरेश्वर"** इति राज्ञः परिपालनधर्मः उक्तः।

**वैराग्यधर्मः –**

कदाचित् शक्रः रम्भां प्रेष्य विश्वामित्रस्य तपोभङ्गकरणे उद्युक्तः अभवत् । परमधुना स्ववैराग्ये अचञ्चलं स्थितः विश्वामित्रः तां 'दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे' इति अशपत् । अनेन मनसः दार्ढ्यं , तपसः वैराग्यधर्मश्च ज्ञायते।

**त्यागधर्मः –**

एकदा निराहारं तपश्चरन् विश्वामित्रः, तपःसमाप्तिदिवसे सिद्धान्नभोजनार्थं सन्नद्ध आसीत् । तदा इन्द्रः विश्वामित्रस्य मनसः स्थैर्यं नाशयितुं ब्राह्मणवेषं धृत्वा भिक्षामयाचत । सोऽपि सिद्धमन्नं सर्वं तस्मै दत्वा अवशिष्टं भोक्तुं सिद्धः आसीत् । परम् इन्द्रः निःशेषं तदन्नमभक्षयत् । निराशः विश्वामित्रः किमपि अनुक्त्वा पुनः मौनेन तपश्चर्यायै वनं गतः। अत्र विश्वामित्रस्य त्यागधर्मः ज्ञायते।

एवं बहुधा धर्माचरणं प्रतिपाद्यतेऽत्र बालकाण्डे रामायणे ।

# श्रीरामाचरितधर्माः - पादुकापट्टाभिषेकश्च

**S.N. Krishna,**
Research Associate,
Kuppuswami Sastri Research Institute

भगवान् श्रीमन्नारायणः संसारसागरमग्नानां जनानाम् उद्धारणाय साक्षात् अवतारभूतः श्रीरामः इति महर्षिणा वाल्मीकिना उक्तम् -

वेदवेद्ये परे पुंसि जाते दशरात्मजे।
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥ इति।

तादृशे वेदात्मके श्रीमद्रामायणे नायकः अवतारपुरुषः श्रीरामः इति सकलविदितम्। पुराणम् इति सुप्रसिद्धा काव्यग्रन्थजातात् पृथक्तया रामायणमहाभारतयोः इतिहाससंज्ञाऽभ्युपेता वर्तते।

इतिहासस्य लक्षणं प्रख्यातम् -

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्।
पूर्ववृत्तं कथायुक्तमितिहासं प्रचक्षते ॥ इति।

इतिह इत्यव्ययात् समुत्पन्न ऐतिह्यशब्दः। ततः परमितिहासश्चेति। पारम्पर्योपदेशः स्यादैतिह्यमितिहाव्ययम् इति अमरः ( २ का. ब्रह्मवर्गः )। काव्यशास्त्रज्ञानामयभिसन्धिः-

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ इति।

उपदेशपरत्वमितिहासे प्रमुखस्थानमावहति। काव्यकारः स्वकृतिनिर्माणे स्वतन्त्रो यतः स्वकीयमुद्देशं साधयितुं स प्रभवेत्। बहुभिर्दैनन्दिनपारायणत्वेन धार्मिकग्रन्थत्वेन चादृतम् श्रीमद्रामायणमहाकाव्यम्। अनेकशोनुवाचकाः, तेष्वेकप्रतिशतात्मकानामपि साक्षाद्वाल्मीकिरामायणेन सह मौलिकरूपेण वा परिवर्तनरूपेण वा परिचयः कदाचित्स्यात्। सर्वेष्वपि रामायणग्रन्थेषु, वाल्मीक्युपज्ञत्वमभ्युपेतं वर्तते।

श्रीरामचन्द्रस्य विषये निखिला अपि श्रेष्ठगुणाः, विक्रमपराक्रमौ मानसिकगुणा आत्मनिष्ठा आसन्नेव। तादृशमेवादर्शभूतं मानवं वर्णयितुं महर्षिवाल्मीकिना चित्रितम्। यद्यपि तस्यावस्थिति-रत्युन्नता स्यात्, तथापि गुणाः मानवीया एवावश्यं भवेयुः।

आरण्यकाण्डे ( वा. रा आ १६ . ४० )

कदा न्वहं समेष्यामि भरतेन महात्मना।

शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन॥ इति सौमित्रिं प्रति रामः प्राह।

चित्रकूटगिरिपरिसरमागत्य अमृतप्रायाणि वचांसि भूयांसि बहु व्याहृत्य प्रतिनिवृत्तं भरतं स्मारं स्मारं विलपतो रामस्येदं वचनम्।

वत्स सौमित्रे ! भरतेन शत्रुघ्नेन च पुनः कदाऽहं सङ्गतो भवेयमिति कथनं युक्तरूपम्। हन्त ! न तावदेवात्र कथितं। लक्ष्मण ! त्वया च कदा समेष्यामिति सम्बोध्यमानस्सौमित्रिर्ननु सन्निहितः। न तावदयमपि भरतशत्रुघ्नाभ्यां सह प्रयातः। एवं स्थिते त्वया च कदा समेष्यामीति कथनम् अनन्वितं हि भवति। गोविन्दराजीये अस्मिन् सन्दर्भे एवम् - पश्य - कदेति। भरतसाहित्याभावेन, विद्यमानाभ्यां सीतालक्ष्मणाभ्यामपि विरहितमात्मना मन्यते, भरतस्नेहातिशयप्रकारोऽयम्। इति।

महीपतिः दशरथः रामस्य वनवासाय भरतस्य राज्याप्त्यै कैकेय्याः वरद्वयं कृच्छ्रात् प्रददौ। अतिकष्टेन दशरथः रामस्य वनवासं, भरतस्य पट्टाभिषेकं च अनुमेने। वनं गच्छन्तं रामं सीता लक्ष्मणः च अनुजग्मतुः। सर्वे पौराः अनुजग्मुः। अयोध्याकाण्डे -

अयाचत नरव्याघ्रं द्वौ वरौ वरवर्णिनी।

इति भरतस्य राज्याप्त्यै कैकेय्याः वरद्वयं कृच्छ्रात् अनुजज्ञे। श्रीरामेण उक्तमिदं -

आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या।

भृशमुत्सहसे तात रक्षितुं पृथिवीमपि॥ ( अ. ११२ . १६ )

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत्।

अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः॥

इति पितृवाक्यपरिपालनमेव धर्मः। तस्मात् कारणात् श्रीरामः वने अवसत्। श्रीरामः भारद्वाजमुनिं प्राप्य तं नत्वा तेन सत्कृतः तस्य निर्देशात् चित्रकूटे सुखम् अवसत्। वसिष्ठाद्यैः

मुनिभिः सह चित्रकूटस्थं चीरजटाधरं , रामं , गत्वा भरतः राज्यं रक्षितुं ययाचे। भरतं राज्यं पालयितुं प्रार्थयत।

श्रीमद्रामायणे यद्यपि नायकभूतः श्रीराम इति सकलविदितं , तथापि भरतस्यानितरसाधारणो महिमा दरीदृश्यते। अयं च सकलगुणसमेतः कैकेयीसूनुः रघुकुलनायकः श्रीरामस्य अनुजः इति अपेक्षया भक्तत्वमवापेक्षते स्म। अतः रामे प्रकटितदास्यभक्तिः , जनेष्वाकलितासक्तिः , पादुकयोर्निवेदितराज्यवृत्तिः अधिकसुकीर्तिश्च चकास्ति स्म। श्रीरामेण एवं उच्यते –

मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः। मम प्राणात् प्रियतरः कुलधर्ममनुस्मरन्॥

अम्बां च कैकयीं रुष्य भरतश्चाप्रियं वदन्। प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः॥

अस्मासु मनसाऽप्येष नाहितं किञ्चिदाचरेत्॥ इति।

श्रीरामस्य वचनं तावत् भरतं प्रति –

चतुर्दशसमाः नीत्वा पुनः अहं पुरीम् एष्यामि इति उक्त्वा पादुके दत्वा तं प्रत्यापयत्। अयोध्याकाण्डे (११२. २१) अधिरोहार्य पादाभ्यां हेमभूषिते एते हि सर्वलोकस्य योगक्षेमं विधास्यतः इति।

चतुर्दशवत्सरान्तरं आगमिष्यामि इति उक्त्वा स्वपादुके दत्वा भरतं प्रैषयत्। अयो. ११३ .३

ततः शिरसि कृत्वा तु पादुके भरतस्सदा।

आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः॥

अनन्तरं नन्दिग्रामे नवीनं सिंहासनं निर्मितम् अभवत्। यतो विवासनात् प्रत्यावृत्तः रामः राजसिंहासने अवश्यं अभिषेक्ष्यति। पूर्वं रामस्य वनवाससमये पादुकाग्रहणान्तरं भरतस्य भावना यादृशी सा तस्य भ्रातृभक्तिं सूचयति। ततश्चायं श्लोकः ( अयो . ११५ . २७ )

यदा हि यत्कार्यमुपैति किञ्चिदुपायनं चोपहृतं महार्घम्।

स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चाद्भरतो यथावत्॥

इति भ्रातृभक्तिं व्यञ्जयति। एवं श्रीरामाचरितधर्मः पितृवाक्यपरिपालनधर्मः। तेषां जीवनादर्शमनुसृत्यैव स्वजीवनं सफलयितुमभिलषामः। तैः कीर्णे वर्त्मनि सञ्चरन्तः वयमपि कृतकृत्याः भवेम॥

# श्रीमद्वाल्मीकिरामायणे वास्तुविचारः

हेच्. के. सुब्रह्मण्यः,

विद्यावारिधि शोधच्छात्रः, ज्योतिषविभागः,

राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति।

संस्कृतवाङ्मये सर्वैः पण्डितैः अविवादेन आदिकाव्यत्वेन अङ्गीकृते महर्षिवाल्मीकिविरचिते रामायणे बालकाण्डाद्यष्टसु काण्डेषु बहुत्र वास्तुशास्त्रीयविचाराः दरीदृश्यन्ते। वास्तुशास्त्रे मयमत-समराङ्गणसूत्र-मानसारादिग्रन्थेषु नगरवर्णनं, भवननिर्माणं, विशिष्य राजभवननिर्माणम् , उद्यान-वाटिका-सरोवरादीनां निर्माणप्रकाराः च यथा वर्णिताः तथैव अयोध्या, लङ्का इत्यादीनां नगराणां वर्णनं वाल्मीकिना कृतं वर्तते। एतेषामवलोकनात् भ्रमः जायते यत् वाल्मीकिः रामायणस्य रचनात्पूर्वं वास्तुशास्त्रं सम्यगधीत्य तदनन्तरमेव रामायणरचनं कृतवान् वा इति।

वाल्मीकिना रामायणस्य बालकाण्डे पञ्चमसर्गे अयोध्यानगरस्य विवरणं तथैव कृतं यथा अस्माभिः मयमतादिग्रन्थेषु नगरनिर्माणाध्याये पठितं वर्तते। पञ्चमसर्गे आदौ वाल्मीकिः वदति - सरयूनद्याः तीरे लोकप्रसिद्धा अयोध्या नाम नगरी स्वयं मनुना सूर्यवंशप्रवर्तकेन निर्मिता आसीत्। सा नगरी धर्मार्थकामपूरिता, धनधान्यादिभिः प्रभूता च आसीत् इत्युक्त्वा अयोध्यानगर्याः पूर्णं विवरणं वास्तुशास्त्रानुरोधेन उपवर्णयति कविवाल्मीकिः। तदुक्तं बालकाण्डे पञ्चमे सर्गे-

तदिदं वर्तयिष्यावः सर्वं निखिलमादितः। धर्मकामार्थसहितं श्रोतव्यमनसूयता॥
कोशलो नाम मुदितः स्फीतो जनपदो महान्। निविष्टः सरयूतीरे प्रभूतधनधान्यवान्॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता। मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्॥

अयोध्यानगरी कोसलदेशस्य प्रधाननगरी राजधानी च आसीत्। तन्नगरस्य दैर्घ्यं द्वादश योजनानि, तथा विस्तृतिः त्रीणि योजनानि चासन्। तत्र राजमार्गाः अनेके नगरस्य विविधपुर-प्रदेशानां मध्ये कल्पितसंपर्काः आसन्। सर्वेषां राजमार्गाणाम् उभयपार्श्वे नित्यं जलासिक्ताः वृक्षाः पुष्पोपहारभरिताः शोभमानाः आसन्। शास्त्रोक्तरीत्या नगरस्य बाह्यभागे नगरं परितः निर्मिताः प्रधानप्रवेशद्वाराः उत्तमदारुनिर्मिताः शिल्पिभिः सुन्दरचित्रादिभिः अलङ्कृताश्च आसन्। तत्र प्रमाणम्-

आयता दश च द्वे च योजनानि महापुरी। श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा॥
राजमार्गेण महता सुविभक्तेन शोभिता। मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः॥

तां तु राजा दशरथो महाराष्ट्रविवर्धनः। पुरीमावासयामास दिवि देवपतिर्यथा ॥

कपाटतोरणवतीं सुविभक्तान्तरापणाम्। सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः ॥

नगरं परितः निर्मितः दुर्गः, दृढः, गम्भीरः, शत्रुजनैः दुरासदश्च आसीत्। नगरं परितः निर्मितस्य दुर्गस्य अग्रिमभागे निर्मितः परिखाविशेषः शत्रुभ्यः अयोध्यामरक्षत्। तदुक्तम्-

दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम्। इति ॥

नगरस्य विविधेषु भागेषु शिल्पकाराः, वन्दिनः, मागधाः च निवसन्ति स्म। एतेषां कर्म तावत् राज्ञः वंशावलिघोषः, बिरुदघोषपुरस्सरं प्रशंसनम् , तथा प्रातः सुप्रभातपठनपुरस्सरं राज्ञां निद्रादुत्थापनञ्च। नगरस्य विविधेषु प्रदेशेषु आपणैः भरिताः मार्गाः कल्पिताः। तत्र प्रतिमार्गं आपणेषु भिन्नभिन्नप्रकारेण समस्ताः वस्तुविशेषाः सर्वदा भरिताः आसन्। नगरे सर्वत्र असंख्याताः आयुधशालाः यन्त्रशालाश्च आसन्।

उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् इत्यनेन राजभवनानाम् अत्यन्तमौन्नत्यं सूचितम्। अट्टालः उत अट्टालकः इत्यनेन गृहच्छदोपरि निर्मितः भवनविशेषः इत्यर्थः द्योतितः। अयोध्यायाम् आकाशचुंबिभवनानि तदानीन्तनकाले एव आसन् इति सूच्यते। आकाशचुंबिभवननिर्माणनकला (SKY SCRAPER BUILDING) आधुनिके काले अद्यतनैः वास्तुविशारदैरेव आविष्कृतेति विचारः केवलभ्रमः इत्यपि सूचितम् । तदनु तेषामट्टालानामुपरि शतघ्नीसंकुलानां स्थापनमासीत् । शतघ्नी इति क्षपणिः अथवा क्षेपणीयः अस्त्रविशेषः (MISSILE) लोंटकसंछन्ना शतघ्नी इत्यर्थस्वीकरणात् । अनेन सौदामिन्या उत्पादितविद्युत्पातात् उन्नतभवनानां रक्षणोपायं रामायणकालीनभवननिर्माण-धुरन्धराः सम्यगजानन्नित्यपि ज्ञायते। एवं रामायणकाले एव शत्रुभ्यः नगररक्षणोद्देशेन निरीक्षणोत्सेध (WATCH TOWER) प्रबन्धः प्रधाननगरेषु राज्ञा कल्पितः इत्यनेन तेषाम् आत्मपरिरक्षणविज्ञानं (SELF DEFENCE) सम्यग्ज्ञायते।

उद्यानाम्रवनोपेतां महतीं सालमेखलाम्। नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥

इत्यादिवाल्मीकिवाक्यानि मयाचार्यस्य -

द्वीपान्तरागतवस्तुभिरभियुक्तं सर्वजनसहितम्। क्रयविक्रयकैर्युक्तं रत्नधनक्षौमगन्धवस्त्राढ्यम् ॥

सागरवेलाभ्याशे तदनुगतायामि पत्तनं प्रोक्तम्। (मयमते दशमोध्यायः-२८)

इत्यादिभिः श्लोकैरुक्तं पत्तनलक्षणं ज्ञापयन्ति। बृहन्नगरी अथवा पत्तनं तदेव भवति यत्र वणिक्समूहः व्यापारोद्देशेन विविधेभ्यः देशेभ्यः समायान्ति, तथा स्वदेशीयविविधसामग्रीणां विक्रयणहेतुना निवसन्ति च। पत्तनेषु वास्तव्यानां जनानां मनोरञ्जनसाधनानि पत्तनेषु भवितव्यानि। वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् इत्यनेन वाल्मीकिना विषयोयं सूचितः।

विश्वकर्मवास्तुशास्त्रे नदीतटे निर्मितस्य नगरस्य (ग्रामस्य वा) खर्वट इति व्यपदेशः। अयोध्या तावत् सरयूतटे निर्मिता नगरी इति कारणात् अयोध्यानगरी खर्वटपुरी इत्यत्र नास्ति संशयः। विश्वकर्मवास्तुशास्त्रे खर्वटस्य लक्षणं एवं प्रतिपादितम् -

वास्तुभूमिः खर्वटस्य नदीतीरगता मता। रसालसालवकुलैस्तिन्त्रिणीवेणुपाटलैः ॥

कदम्बैर्नारिकेलैश्च श्रीपर्णैस्तिलकैरपि। छायावृक्षसमाकीर्णा निष्कुटारामसंवृता ॥

दशादिविंशद्वीथिभिः आवृता च समन्ततः। शतगेहा मुख्यवीथी तन्मध्ये कालिकागृहम् ॥

वागुराजीविभिश्चान्यैर्भृतकैश्च कृषीवलैः। मदिरागेहसंयुक्ता विपण्यादिभिरावृता ॥ इति ।

वाल्मीकिनापि अयोध्यायाः वर्णनमनेनैव प्रकारेण कृतमिति स्पष्टं प्रतीयते। तदुक्तम् अयोध्यायाः वर्णनसमये-

राजमार्गेण महता सुविभक्तेन शोभिता। मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥

उद्यानाम्रवनोपेता महतीं सालमेखलाम्। कपाटतोरणवतीं सुविभक्तान्तरापणाम् ॥ इत्यादि ।

अन्तरापणशब्दस्य प्रयोगः अपराजितपृच्छानामके ग्रन्थे द्रष्टुं शक्यते। नगरस्य यस्मिन्भागे जनानाम् गमनागमनमधिकं तत्र अन्नागारः , ताम्बूलफलदन्तगन्धकुसुममुक्तकादीनां, लोहनिर्मितवस्तूनां , सर्वविधवस्त्राणाम् , स्वर्णाभरणानां तथा इतरसुखोपभोगसाधनानां च यथेच्छया आपणानि भवन्ति तस्य *अन्तरापणम्* (Shopping Mall/Big Bazar) इति व्यपदेशः। अयोध्या कोसलानां राजधानी आसीत्। अतः तन्नगरीं परितः उन्नतोन्नतानि गोपुराणि विस्तृतप्राकाराः दुर्गाश्च राराजमाना आसन्।

शत्रुणा अभेद्याः गहनाः जलभरिताः परिखाः दुर्गस्य रक्षणाय निर्मिताः। शत्रुजनानामाक्रमण-रोधनाय तत्र सदा गजाः अश्वाः उष्ट्राः गावः खराश्च सर्वदा जागृताः सन्नद्धाश्च आसन्। तदुक्तं वाल्मीकिना बालकाण्डे -

दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम्। वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥

नानादेशनिवासैश्च वणिग्भिरुपशोभिताम्। इति ।

अत्र राजधान्या अयोध्यायाः वर्णनं यथा प्रदर्शितं तद्वदेव राजधान्याः विन्यासः रक्षणोपायाश्च वास्तुग्रन्थेषु मानसागर- समराङ्गणसूत्र-मयमतादिषु दृश्यन्ते।

किञ्च वाल्मीकिरामायणस्य सुन्दरकाण्डे द्वितीयसर्गे हनूमता लङ्कानगर्याः प्रवेशवेलायां लङ्कानगर्याः यद्वर्णनं कृतं तत्तु वास्तुशास्त्रे कृतस्य महानगर्याः वर्णनस्य अपेक्षया सुन्दरं मनोहरञ्च वर्तते। लङ्कानगरीं परितः शाद्वलाः मार्गाः , गन्धवन्ति वनानि , सालवृक्षाः, फलपुष्पैः भरितानि वनानि, च लम्बकनामके पर्वते स्थितेन हनुमता साश्चर्यं दृष्टानि। अत्रापि भवनानामुपरि शतघ्नी स्थापिता इति ज्ञायते। तत्र न केवलं राजभवनानि अपि तु मन्त्रिणामितरेषामधिकारिणाञ्च सौधाश्च पूर्णरूपेण स्वर्णनिर्मिताः आसन्। तदुक्तम् वाल्मीकिना-

भुजगाचरितां गुप्तां शुभां भोगवतीमिव। तां स विद्युद्घनाकीर्णां ज्योतिर्गणनिषेविताम्॥
चण्डमारुतनिर्ह्रादां यथा चाप्यमरावतीम्। शातकुम्भेन महता प्राकारेणाभिसंवृताम्॥
किङ्किणीजालघोषाभिः पताकाभिरलंकृताम्। आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान्॥
विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः। जाम्बूनदमयैद्वारैर्वैदूर्यकृतवेदिकैः॥
वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः। तप्तहाटकनिर्यूहैः राजतामलपाण्डुरैः॥
वैदूर्यकृतसोपानैः स्फाटिकान्तरपांसुभिः। चारुसंजवनोपेतैः खमिवोत्पतितैः शुभैः॥
क्रौञ्चबर्हणसंघुष्टैः राजहंसनिषेवितैः। तूर्याभरणनिर्घोषैः सर्वतः परिनादिताम्॥
काञ्चनानि विचित्राणि तोरणानि च रक्षसाम्। लङ्कामुद्योतयामासुः सर्वतः समलंकृताम्॥ इति।

एवम् इतरत्रापि सुन्दरकाण्डे नवमद्वादशादिसर्गेष्वपि वास्तुशास्त्रानुगुणं निर्मितं रावणस्य भवनं तस्य पुष्पकविमानम् इत्यादीनाम् अमोघवर्णनं वाल्मीकिना कृतं वर्तते। तदुक्तं - विमानं पुष्पकं नाम सर्वरत्न विभूषितम् इति । इदमुच्यते यत् - विश्वकर्मणा इदं विमानं ब्रह्मणः कृते निर्मितम्। कुबेरः पितामहात् विमानमिदं घोरतपसा प्राप्तवान्। तदनन्तरं रावणः स्वकीयेन वीर्येण कुबेरं जित्वा इदं पुष्पकविमानं स्ववशञ्चकार इति। रावणस्य भवनं लङ्कानगरीस्थ-इतर सौधांश्च दृष्ट्वा हनुमान् अचिन्तयत् अहो इदं नाको वा देवलोको वा इन्द्रस्य नगरी अमरावती वा उत साक्षात् ब्रह्मणः स्थानं वा इति। अत एव हनूमता वारं वारम् उच्यते इयं नगरी वास्तुशास्त्रप्रवर्तकेन विश्वकर्मणा स्वयं निर्मिता इति।

॥ इति शम्॥

# रामो विग्रहवान् धर्मः

K.V.Suryaprakash

Sahithya Siromani, M.A.Sanskrit,

M.Phil, Ph.D (persuing)

Research Assistant, Sanskrit Academy

Osmania UniversityHyderabad – 500 007

9866498906 .

sanskritsurya@gmail.com

श्रीरामचन्द्रः भगवतः विभोः अपरोऽवतारः । भगवतः अवतारस्य प्रयोजनं तु भगवद्गीतायामेवमुक्तम् -

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**

**परित्राणाय साधूनां विनाशाय दुष्कृताम् । धर्म संस्थापनार्थाय संभवामि युगे युगे ॥** इति ।

[अध्या 4 श्लो.7,8.]

अत्र धर्मस्य स्थापनमेव विष्णोरवतारस्य महत् प्रयोजनमिति स्पष्टमुक्तम् । परमात्मनः विष्णोरवतारेषु अन्यतमावतारभूतस्य श्रीरामस्यापि प्रमुखं कर्तव्यं धर्मसंस्थापनमेव भवेत् । अत एव वाल्मीकिना श्रीमद्रामायणे 'रामः मूर्तिमान् धर्मः' इति सम्यगभिहितम् ।सीतापहरणे साहाय्यमभिलषन्तं रावणं मारीचः **'रामो विग्रहवान् धर्म'** इत्युपदिशति । रामबाणहतेन शत्रुणा मारीचेन रामस्य धर्मनिष्ठा प्रशंसिता ।

रामस्य धर्मनिरतिं लोकेभ्यः निवेदयितुमेव वाल्मीकिः रामं धर्मज्ञः, धार्मिकः, इत्यादिभिः विशेषणैः नितरां वर्णयति । रामस्य चरितम् बहूनां धर्माणामाकरमिति रामायणस्य अनुशीलनेन ज्ञायते । कथायां बालकाण्डादारभ्य उत्तरकाण्डपर्यन्तं रामस्य धर्माचरणतत्परता वाल्मीकिना संग्रथिता । कथागतानि पात्राणि (राक्षसात् विना) रामस्य धर्मनिष्ठां तत्तत्सन्दर्भेषु मुक्तकण्ठं प्रशंसन्ति । तदद्य स्थालीपुलाकन्यायेन समीक्ष्यते ।

**बालकाण्डे –**

धर्माकूतव्याख्याने बालकाण्डस्यारम्भे धर्मज्ञत्व-धर्मनिष्ठत्व-धर्मस्वरूपत्व-विशिष्टस्यैव रामस्य चरितं वर्णितमित्यवगम्यते इति उपपत्तिपूर्वकं प्रतिपादितम्।

रामायणस्याऽविर्भावात्पूर्वमागतं नारदं, महर्षिः वाल्मीकिः, 'कोऽन्वस्मिन् सांप्रतं लोके धर्मज्ञः' इति पृच्छति । तं प्रति नारदः 'इक्ष्वाकुवंशप्रभवो राम' इति प्रतिवचनं ददाति । एवमत्र नारदेन 'रामः धर्मज्ञ' इति निवेदितम् । ब्रह्मा स्वयमाविर्भूय रामस्य चरितं कुर्विति वाल्मीकिं निवेदयन् तस्य धार्मिकत्वमेवं निरूपयति -

**रामस्य चरितं कृत्स्नं कुरु त्वं ऋषिसत्तम ।**

**धर्मात्मनो भगवतो लोके रामस्य धीमतः ॥** इति । [स.2श्लो.31,32.]

यागरक्षणार्थं रामं याचन्तं विश्वामित्रं दशरथः **ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसीति** वक्ति । अत्र रामः धर्मप्रधानत्वेन वर्णितः । विश्वामित्रस्याज्ञया रामलक्ष्मणौ सरयूं गङ्गां च प्रणतौ। अस्मिन् सन्दर्भे **'ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ'** इति रामलक्ष्णौ धार्मिकाविति कीर्तितम् ।

**अयोध्याकाण्डे –**

रामस्य वनगमनवृत्तान्तं ज्ञात्वा विलपन्तीं कौसल्यां सान्त्वयन् लक्ष्मणः **'को धर्मं त्यजेत् पुत्र्यकारणात्** ' इति भणति । अत्र गोविन्दराजीये धर्ममित्येतत् धर्मं = धर्मस्वरूपमिति व्याख्यातम् । रामः धर्मस्वरूप इति व्याख्यातुराशवः। एवं रामस्य वनगमनसमये मात्रा कौसल्यया-

**यं पालयसि धर्मं त्वं धृत्या च नियमेन च ।**

**स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥** [स 25 श्लो 3] इति उक्तम् ।

अत्राऽपि रामः धर्मपरिपालक इति सूचितम् । तस्मिन्नेव सन्दर्भे प्रजा अपि राममेवं श्लाघन्ते -

**मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः ।**

**पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥** इति । [स 33 श्लो15.]

अत्र रामः धर्मसारः धर्मद्रुमस्य मूलं च भवतीति वर्णितः । तथैव राजा दशरथः आशीःपूर्वकं रामं वनवासाय प्रेषयन् धर्माभिनिविष्टमनसः तव बुद्धिः विनिवर्तयितुं न शक्यते इति कथयति -

**न हि सत्यात्मनस्तात धर्माभिमनसस्तव ।**

**विनिवर्तयितुं बुद्धिः शक्यते रघुनन्दन ॥** इति । [स 34 श्लो 32 ]

अत्र रामस्य धर्मनिष्ठा कथिता । तस्मिन्नेवाऽवसरे सुमन्त्रः राममुद्दिश्य एवं वक्ति -

ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मपरिरक्षिता ।

रक्षिता जीवलोकस्य बली रामोऽभिषिच्यताम् ॥ इति । [स 35 श्लो 30]

अत्र गोविन्दराजः स्वधर्मस्य दुष्टनिग्रहपूर्वकशिष्टपरिपालनरूपक्षत्रिय-धर्मस्य परिरक्षिता इति विवृणोति । तस्मादेव सुमन्त्रेण रामस्य धर्मरक्षकत्वं शंसितम् ।

वनं गतं स्वपुत्रं रामं प्रति विलपन्तीं कौसल्यां सान्त्वयन्ती सुमित्रा रामो धर्मे स्थितः। अनुगच्छति वैदीही धर्मात्मानं तवात्मजमिति रामस्य धर्मपरतां श्लाघते । एवं वनगमनसमये गङ्गां तीर्त्वा कस्यचित् न्यग्रोधस्य मूलमाश्रित्य रामः लक्ष्मणं प्रति वीर्येण राज्याभिषेचने शक्तोऽपि अधर्मपरलोकभीतत्वेन न तथाऽकरवमिति वदति ।

अधर्मभयभीतश्च परलोकस्य चाऽनघ ।

तेन लक्ष्मण नाद्या ऽहमात्मानमभिषेचये ॥ इति । [स53 श्लो 26]

अत्र रामः अधर्माद्भीत इति स्वयमेव प्रकटयति । रामाज्ञया सुमन्त्रः अरण्याद्विनिवृत्य दशरथाय रामस्य वृत्तान्तं निवेदयन् धर्ममेवानुपालयन् इत्यादिना रामस्य धर्मपालनं सूचयति । कौसल्या वनं गतं राममधिकृत्य भर्तारं दशरथमेवमाचष्टे -

नैतस्य सहिता लोका भयं कुर्युर्महामृधे ।

अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ इति । [स 61 श्लो20]

अत्र कौसल्या रामः अधर्ममार्गस्थं धर्मेण योजयतीति वदति । अस्मिन्नेव सन्दर्भे सा धर्मनिरते पुत्रे त्वया विवासिते ते सनातनः द्विजातिचरितः शास्त्रदृष्टः धर्मोऽस्ति किमित्येवं पृच्छति ।

द्विजातिचरितो धर्मः शास्त्रदृष्टः सनातनः ।

यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ इति । [स 61 श्लो 23]

अत्राऽपि रामः धर्मनिरतः इति वर्णितः । तथा च नूतनगृहप्रवेशसमये वास्तुपूजा कर्तव्या इत्येष धर्मः। स च रामेणानुष्ठित इति 'रामश्च चित्रकूटे पर्णशालाप्रवेशसमये वास्तुयागं परिसमाप्य तुतोष' इति वर्णनेन बोधितम् -

इष्ट्वा देवगणान् सर्वान् विवेशावसथं शुचिः ।

बभूव च मनोह्लादो रामस्याऽमिततेजसः ॥ इति । [स 56 श्लो 30]

अनेन रामः धर्मानुष्ठानेन सन्तुष्टो भवति इत्यपि सूचितम् । तथैव चित्रकूटे वनविहारसमये रामः सीतां प्रति पितृवाक्यपालन- धर्मानुष्ठानेन मया फलद्वयं प्राप्तमिति वदति ।

**अनेन वनवासेन मया प्राप्तं फलद्वयम् ।**

**पितुश्चानृणता धर्मे भरतस्य प्रियं तथा ॥** इति । [स 94 श्लो 17]

अत्राऽपि धर्मानुष्ठानेन रामः प्रीत इति संलक्ष्यते ।

चित्रकूटे रामं सम्मानपूर्वकं नगरमानीय तस्य राज्याभिषेकं कर्तुं ससैन्यमागतं भरतं दूरादुपलक्ष्य, अयं रामं हन्तुमना आगत इति भ्रान्त्या यदा क्रुद्धो भवति लक्ष्मणः, तदा तं प्रति रामः निगदति -

**नेयं मम मही सौम्य दुर्लभा सागराम्बरा ।**

**न हीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥** इति ।

अत्र अधर्मेण प्राप्तं शक्रत्वमपि मह्यं न रोचत इति वदता रामेण स्वस्यानुपमा धार्मिकता सम्यगाविष्कृता। अस्मिन् सन्दर्भे रामभरतयोः धर्मप्रवृत्तिं पुरस्कृत्य तत्रत्याः ऋषयः सिद्धाश्च एवमभिनन्दन्ति-

**स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ ।**

**श्रुत्वा वयं हि संभाषामुभयोः स्पृहयामहे ॥** इति। [स 112 श्लो 3.]

अत्राऽपि रामस्य धर्मतत्परता प्रशंसिता ।

**अरण्यकाण्डे –**

रामे दण्डकारण्यं गते तत्रत्याः ऋषयः आगत्य तं राक्षसेभ्यो रक्ष इति अभ्यर्थयन्तः त्वयि पुष्कलः धर्मो वर्तते इति वदन्ति -

**विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ।**

**पितृभक्तिश्च सत्यं च त्वयि धर्मश्च पुष्कलः ॥** इति। [स 60 श्लो 9.]

शूर्पणखा खरादीनां समक्षं स्वाऽवमानं कथयन्ती रामलक्ष्मणावुद्दिश्य धर्मचारिणाविति भणति । सीतापहरणे साहाय्यमभ्यर्थयन्तं रावणं मारीचः रामो विग्रहवान् धर्मः इत्याचष्टे । एवं शत्रुपक्षगतेन मारीचेन रामः विग्रहवान् धर्म इति प्रशंसितः । लोके च इदमेव प्रशंसावाक्यं विश्रुतिं गतम् ।

प्रव्राजकरूपेणागतं रावणं प्रति सीता आत्मवृत्तान्तं कथयन्ती रामं **धर्मनित्यो जितेन्द्रियः** इति कीर्तयति । रावणेन अपह्रियमाणा सती सीता बहुविधमाक्रोशन्ती धर्मस्य हेतोः, जीवितं, सुखमर्थाश्च त्वया परित्यक्ताः इति रामं वर्णयति ।

**जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् ।**

**ह्रियमाणामधर्मेण मां राघव न पश्यसि ॥** इति । [स 49 श्लो 25]

लङ्कायां रावणस्य प्रलोभवचनानि निराकृत्य रामं **'धर्मात्मा इति' "रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः"** इति च सीता श्लाघते ।

**किष्किन्धाकाण्डे –**

रामस्य वृत्तान्तं कथयन् हनुमान् सुग्रीवं प्रति रामस्य धर्मतत्परतां **धर्मे निगदितश्चैव** इति वक्ति । द्वितीयवारं वालिना सह योद्धुं सुग्रीवं प्रोत्साहयन् तस्य भयं निराकुर्वन् रामः नाहमनृतं कथंचन वक्ष्ये इति स्वयमेव विशदयति -

**अनृतं नोक्तपूर्वं मे वीर कृच्छ्रेऽपि तिष्ठता ।**

**धर्मलोभपरीतेन न च वक्ष्ये कथञ्चन ॥** इति । [स 14 श्लो 14]

सुग्रीवेण सह द्वितीयवारं योद्धुं न गन्तव्यमिति तारया भार्यया निषिद्धः सन् वाली अत्र विषादः न कर्तव्यः । धर्मज्ञः रामः कथं मयि पापं करिष्यति इति तस्यै रामस्य धर्मज्ञतां **'धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति'** इति निवेदयति । ततः रामबाणेन विद्धः सन् भूमौ पतित्वा वाली रामं निन्दन् धर्मवानिति लोके त्वं विश्रुतः । किमर्थमधर्ममाचरसि इति ब्रूते -

**राम राजकुलेणातः धर्मवानिति विश्रुतः ।** इति । [स 17 श्लो 26]

रामः धर्मवानिति तदा किष्किन्धापर्यन्तमपि परिव्याप्तमित्यतः विशदं भवति । वालिनः निन्दावचनानि निराकुर्वन् रामः वयं परमे स्वधर्मे स्थिताः इति वदति ।

**ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ।**

**भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥** इति। [स 18 श्लो 11]

अस्मिन्नेव सन्दर्भे रामः वालिनं प्रति पितृपैतामहे धर्मे स्थितं मां धर्ममविज्ञाय केवलं दोषमास्थितः सन् प्रदूषयसीत्येवमधिक्षिपति -

**त्वं तु धर्ममविज्ञाय केवलं दोषमास्थितः ।**

**प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् ॥** इति। [स 18 श्लो 44]

वाल्यपि रामस्य युक्तिपूर्वकं प्रतिवचनं निशाम्य तृप्तो भूत्वा क्षमस्वेति वक्ति इति वदति कविः । अनेन रामः धर्मपथानुवर्तीति वाल्मीकेरभिप्रायः प्रकट एव खलु । ताराऽपि वालिनः मरणात् दुःखिता सती राममधिक्षिपन्ती त्वमुत्तमधार्मिकः इत्याख्याति । एवं तारयाऽपि रामस्य धर्मप्रवृत्तिः श्लाघिता ।

**सुन्दरकाण्डे –**

अशोकवनिकास्थितां सीतां प्रति हनुमान् रामस्य धर्मरक्षणपरत्वमेवं द्विवारं निवेदयति-

**रक्षिता स्वस्य वृत्तस्य स्वजनस्य च रक्षिता ।**

**रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥** इति । [स 31 श्लो 7 सं 35 श्लो 10]

लङ्कायां रावणाय सुग्रीवस्य सन्देशं कथयन् हनुमान् राममधिकृत्य धर्म्यं पन्थानमाश्रितः इति **"रामो नाम महातेजाः धर्म्यं पन्थानमाश्रितः"** इति भणति । तथा लङ्कातः आगत्य महेन्द्रपर्वतस्य श्रृङ्गे स्थितेभ्यः जाम्बवत्प्रमुखेभ्यः मारुतिः स्वलङ्कायात्रां कथयन् मैनाकातिथ्यनिराकरणकथनावसरे **"रामो धर्मभृतां श्रेष्ठः महेन्द्रसम विक्रमः"** इति निवेदितमिति वक्ति ।

**युद्धकाण्डे –**

सीता रामाय प्रदीयतां । तेन रामेण निरर्थकं वैरं नः न क्षममिति रावणाय हितमुपदिशन् विभीषणः-

**न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना ।** [स 9 श्लो17. ] इति वदति ।

एवमत्र विभीषणेन रामः धर्मानुवर्तीति प्रशंसितः । सुग्रीवसैन्ये स्थितान् वीरान् गणयन् शुकः रामस्य धर्मनिष्ठां रावणमेवं वक्ति - रामे धर्मः स्थिरं तिष्ठति । रामश्च धर्मात् नाऽतिवर्तते इति ।

लक्ष्मणः स्वीयास्त्रप्रयेगे विफलः सन् रामस्य धर्मनिष्ठां प्रशंसन् बाणं विकृष्य अस्त्रेण संयोज्य इन्द्रजितं हन्ति। अस्मिन्नवसरे सः

**धर्मात्मा सत्यसत्धश्च रामो दाशरथिर्यदि ।** [स 91 श्लो 73] इत्याह ।

एवमेव रावणं निहत्य सीतया परिवारेण च सह अयोध्यां प्रति गमनसमये स्वाऽश्रममागतं रामं प्रति भरद्वाजः रावणसंहारादिकः वृत्तान्तः सर्वोऽपि तपसा मया विदित इति वदन् **धर्मवत्सल** इति तं संबोधयति ॥

**उत्तरकाण्डे –**

रामे राज्यं प्रशासति, सः, वन्दिमागधैः प्रबोधनसमये **धर्मनित्यः** इति **श्रीश्च धर्मश्च काकुत्स्थ त्वयि नित्यं प्रतिष्ठिताविति** च प्रशंसितः । एवं वाल्मीकिः रामस्य राज्यपालनविधानमभिवर्णयन् **"पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित्"** इति निवेदयति ।विप्रकृतं दण्डप्रहारं रामाय निवेदयितुमागतेन शुना रामस्य धर्मपरता एवं वर्णिता -

**विदितश्चैव ते धर्मः सद्भिराचरितस्तु वै ।**

**धर्माणां त्वं परं धाम गुणानां सागरोपमः ॥** इति अधिकपाठे ॥ [ स 2 श्लो 10]

रामः शत्रुघ्नं सप्तरात्रमिहोष्य ऊर्ध्वं मथुरां गन्तासीति वदति । स तस्य धर्मयुक्तं वचः श्रुत्वा दीनया वाचा बाढमिति ब्रवीति । अत्र रामस्य वागपि धर्मयुक्ता इत्येवं **रामस्य तद्वचः श्रुत्वा धर्मयुक्तं मनोगतम् ।** [स 72 श्लो 18] इति वाक्येन सूचितम् ।

तथैव अश्वमेधयागं चिकीर्षुणा रामेणा आगतान् वसिष्ठवामदेवादीन् प्रति धर्मयुक्तं वचः उक्तमिति भणति कविः –

**उवाच धर्मसंयुक्तमश्वमेधाश्रितं वचः ।** इति । [स 91 श्लो 6]

एवं 'राजसूयेन यष्टुमिच्छामि । तत्र धर्मो हि शाश्वतः' इति वदन्तं रामं भरतः **त्वयि धर्मः परः साधो** इति वदति । यदा रामः मुनिवेषेणागतेन यमेन रहसि संभाषमाणः आसीत् तदा दुर्वासाः सहसा आगत्य रामेण किं कार्यमिति पृष्टः सन् **श्रूयतां धर्मवत्सल** इति रामं संबोधयति । एवं वाल्मीकिना रामस्य धर्ममार्गानुष्ठाननिष्ठागरिमा बह्वीषु संघटनासु सुनिपुणं वर्णितः । बहुभिः पात्रैः यथोचितं प्रशंसितश्च । अस्मिन्नेव प्रकरणे रामयणे सामान्य- विशेषधर्मनिरूपणसन्दर्भे क्षात्र-सत्य-दानादयः विविधाः धर्माः रामाश्रिता एव वाल्मीकिना परिपोषिता इति प्रतिपादितमेव । एवं रामायणस्य समग्रपरिशीलनेन **रामः विग्रहवान् धर्मः** इति निश्चेतुं शक्नुमः । एवं श्रीमद्रामायणे आर्षकविना वाल्मीकिना बहुषु सन्दर्भेषु धर्मस्य तत्वं वैविध्यं च सम्यग्विवेचितम् ॥

**इति शम्**

# श्रीमद्वाल्मीकीयरामायणे शबरीकृतातिथ्यधर्मः

Dr.Uma maheswari
Asst.Professor of Sanskrit
Queen Mary's College
Mylapore, Chennai-4

"अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥"

इत्युक्तवतो धर्मज्ञस्य आदर्शपुरुषोत्तमस्य श्रीरामस्य कथां स्मारं स्मारं सुखिनः स्याम । आदर्शमार्गदर्शने स्वधर्मपरिपालनस्य, नीतेश्च बोधने श्रीमद्वाल्मीकीयरामायणमादर्शकाव्यं विहाय किं वाऽन्यत् भवितुमर्हति। श्रीमद्वाल्मीकिरामायणे रामादिमहापुरुषाणां जीवनचरितात् यद्यपि ज्ञातुं बहवः धर्मविचाराः विद्यन्ते, तथापि, आतिथ्यधर्मविषये किञ्चित् अधीत्य, तत्रापि आतिथ्यधर्मार्थमेव तपः कृतवत्याः शबर्याः आतिथ्यधर्म एव अत्र विचारविषयत्वेन स्वीकृतः।

"मातृदेवो भव। पितृदेवो भव। आचार्य देवो भव। अतिथिदेवो भव" इति अतिथिमपि ईश्वरत्वेन भावयितुं प्रेरयति वेदः। नचिकेताः पितृवचनानुसारं यमलोकं प्राप्तवान् । यमभवने भोजनं विना दिनत्रयं यावत् यमदेवस्य दर्शनार्थं प्रतीक्षामकरोत् इति ज्ञात्वा यमदेवः –

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः।

नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व॥"[20] – इति त्रीन् वरान् प्राददात्। अनेन आतिथ्यस्य माहात्म्यं सम्यगवगन्तुं शक्नुमः। एवमेव कुमारसम्भवे[21] पार्वत्याः दर्शनार्थं ब्रह्मचारी यदा आगतः तदा पार्वती सम्यक् तस्मै आतिथ्यं चकार इत्यतः स ब्रह्मचारी स्वतपसः अर्धं भागमपि तस्याः तपसः फलप्राप्त्यर्थं दातुं सिद्धः आसीत् । अतिथिशब्देनैव वयमेतद्बोद्धुं शक्नुमः यत, यस्य आगमने न तिथिः न वा समयः निर्दिष्टः सोऽतिथिर्भवति इति ।

---

[20] कठोपनिषदि १.९

[21] कालिदासस्य कुमारसम्भवे –५ सर्गः

श्रीमद्वाल्मीकिरामायणे शबरीवृत्तान्तः, 'आतिथ्यधर्मः मोक्षप्रदायकः' इत्यस्मान् बोधयति। एका सामान्यवनवासिनी व्याधस्त्री श्रीरामस्य दर्शनार्थं, तस्मा आतिथ्यं कर्तुं च सम्पूर्णं जीवनकालं तप अकरोत्। सा पूर्वजन्मनि चित्रकवचनामकगन्धर्वराजस्य एकैव सुता आसीत् । तस्याः नाम मालिनी इति आसीत् । वीतहोतृनामकः महाज्ञानी तां परिणीतवान् । स ब्रह्मणि सदैव लीन आसीत् इत्यतः सा मालिनी (परं शबरी) युवावस्थावशात् कल्माषनामकव्याधेन सह दांपत्यमाचरितवती । अनेन कुपितः पतिः "त्वं व्याधस्त्री भव" इति तां शशाप । दुःखिता मालिनी रुदन्ती शापविमोचनस्य गतिः केति पतिमपृच्छत् । पृष्टः स पतिः, श्रीराम एव तां शापात् मोक्षयिष्यति इत्युक्तवान् । ततः सा मतङ्गाश्रमं प्राप्य तत्रैव श्रीरामं प्रतीक्ष्य तप अकरोत् । इयं पूर्वजन्मकथा यद्यपि वाल्मीकीयरामायणे न विद्यते, तथापि तस्याः पूर्वं कृतस्य कर्मणः जिज्ञासया "पुराणिक एनसैक्लोपीडिया" इति ग्रन्थात् सङ्गृहीता अस्ति ।

दशरथात्मजौ तौ भ्रातरौ रामलक्ष्मणौ कबन्धोक्त्या पम्पां प्रति प्रस्तिथौ । पम्पायां तौ शबर्या आश्रमं दृष्टवन्तौ । तौ बहुभिर्द्रुमैरावृतम् तं सुरम्यमाश्रममासाद्य तमभिवीक्षन्तौ शबरीमभ्युपेयतुः॥ तौ दृष्ट्वा सा वृद्धा सिद्धा शबरी, अञ्जलिं कृत्वा रामलक्ष्मणयोः पादौ गृहीत्वा पाद्यमाचमनीयं सर्वं यथाविध्यकरोत् । तेन सन्तुष्टो रामः तस्याः कुशलप्रश्नादिकमकरोत् । तस्य उत्तरत्वेन शबरी अवोचत् – तव सन्दर्शनात् अद्य एव प्राप्ता तपःसिद्धिः। अद्यैव मे जन्म सफलं जातम् । निश्चयेनाद्य स्वर्गगतिः मे भविष्यति, यतोऽहं तव आतिथ्यं कृत्वा पूजयिष्यामि। तव प्रसादात् अहमक्षय्यान् लोकान् गमिष्यामि यत्र मे गुरवो वसन्ति – इति । सर्वे मतङ्गशिष्याः यानहं पर्यचारिषं ते दिवमारूढाः। केवलमहमत्र स्थितास्मि, आदिष्टा महर्षिभिः धर्मज्ञैः महाभागैः यत्

"आगमिष्यति ते रामः सुपुण्यमिममाश्रमम्।
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः।[22]
तञ्च दृष्ट्वा वरान् लोकान् अक्षय्यान् त्वं गमिष्यति ॥ " इति ।

ततो मया पम्पातीरसम्भवं विविधं वन्यं तवार्थे सञ्चितम् इति । रामः सर्वं गृहीत्वा पुनराह – यद्यपि तत्त्वेन महर्षिणां प्रभावं दनोः सकाशात् श्रुतं , तथापि प्रत्यक्षं द्रष्टुमिच्छामि इति । तदा शबरी सन्तोषेण तं वनं वर्णयन्ती ताभ्यामदर्शयत् । इदं मतङ्गवनं मेघघनप्रख्यं मृगपक्षिसमाकुलं सुन्दरमस्ति । अत्र मम गुरवः नीडं कृत्वा मन्त्र-पूजा-यज्ञादिकं कृतवन्तः। तेषां तपःप्रभावेन अद्यापि सर्वाः दिशः द्योतयन्ति।

---

[22] श्रीमद्वाल्मीकीयरामायणे – ३.७४.१५

तेषामुपवासश्रमकारणेन सप्तसागरसमेतपम्पासरः अत्रैव अभ्युपागमत् । अत्र स्नातैः तैः पूजार्थं कृताः पुष्पमालाः अद्यापि म्लानतां न गताः। एतत् वनं सम्यक् दृष्ट्वा अस्य महत्वं ज्ञात्वा मह्यमनुज्ञां यच्छ यदहमपि स्वर्गं गत्वा तेषां महात्मनां मुनीनां परिचर्यां कर्तुं शक्नुयामिति श्रीरामं प्रार्थयत ।

अस्याः आतिथ्यं गुरुभक्तिं श्रद्धां निष्ठां च ज्ञात्वा मुदितः संतृप्तश्च श्रीरामः अकथयत् –

**"अर्चितोऽहं त्वया भद्रे गच्छ कामं यथासुखम्"**[23] इति।

ततः सा शबरी आत्मसमाधिना –

**अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने । ज्वलत् पावकसंकाशा स्वर्गमेव जगाम ह ॥** [३.७०.२६]

तत्र सा दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना दिव्यांबरधरा विराजमाना सौदामिनीव तं देशं प्राप्नोत् यत्र तस्याः सुकृतात्मानः महर्षयः विहरन्ति स्म। वृत्तान्त एषः प्रदर्शयति आतिथ्यधर्मस्य माहात्म्यम् ॥

---

[23] श्रीमद्वाल्मीकीयरामायणे – ३.७४.३

# श्रीमद्वाल्मीकिरामायणे युद्धधर्माः

S.Shivaguhan

Research Scholar

PPSM. Bangalore

'रामो विग्रहवान् धर्मः ' इति सर्वे जानन्ति। तत्रापि युद्धकाण्डे बहूनां युद्धधर्माणाम् आचरणं दरीदृश्यते। तत् यथामति यथाशक्ति उपस्थाप्यते।

प्रथमं के अवध्याः ? इति विषये कानिचन उदाहरणानि उद्ध्रियन्ते। विभीषणः रावणाय श्रीरामस्य पराक्रमं बलं महत्त्वमित्यादि सर्वमुक्त्वा, रामाय विपुलधनम्, आभरणानि, मैथिलीं च दत्वा सन्धिं करोतु इति उपादिशत्। तदा कुपितः रावणः तस्य भर्त्सनं कृत्वा तस्मै एवम् उवाच-

**योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर।**

**अस्मिन् मुहूर्ते न भवेत् त्वां तु धिक् कुलपांसन ॥** [युद्ध० १६-१६] इति ।

अस्यार्थः इदमेव वचः यद्यन्यः अवदिष्यत्, तर्हि तमहम् अहनिष्यम् । त्वां तु भ्राता इत्यनेनैव कारणेन त्यजामि इति। उक्तं च विदुरनीतावपि -

**अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः। येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः॥** इति।

एतेन ज्ञातयो न हन्तव्याः इति ज्ञायते ।

एवमेव रावणेन दूतत्वेन प्रेषितः शुकः सुग्रीवाय रावणसन्देशं यथातथम् उक्त्वा पुनः पक्षी भूत्वा डयति स्म तदा वानराः तं गृहीत्वा पीडयामासुः। तदा शुकः अवोचत्-

**न दूतान् घ्नन्ति काकुत्स्थ ! वार्यन्तां साधु वानराः।**

**यस्तु हित्वा मतं भर्तुः स्वमतं संप्रधारयेत्।**

**अनुक्तवादी दूतः सन् स दूतो वधमर्हति॥** [युद्ध० २०-१८] इति।

अनेन यथोक्तवादी दूतो न हन्तव्यः इति ज्ञायते। उक्तं च राजधर्मेऽपि यथोक्तवादिनो दूतस्य अवध्यत्वम् -

**यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः। यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः॥** इति ।

तथैव यदा चाररूपेणागतौ शुकसारणौ गृहीतौ तदा रामः तावुवाच-

**न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति।**

**न्यस्तशस्त्रौ गृहीतौ च न दूतौ वधमर्हथः॥** [युद्ध० २४-२०] इति।

शुकसारणौ गृहीतौ तथा शस्त्ररहितौ इत्यतश्च तौ अवध्यौ इति रामः तौ मुमोच। एवं बहुत्र अवध्यानां विषये उच्यते॥

युद्धसमये नायकेन कथं भाव्यम् ? सेनासन्नाहः कथं भवेत् ? व्यूहरचना , इत्यादयो नैके विषयाः प्रोक्ताः सन्ति । तत्र कानिचन उदाहरणानि पश्यामः –

विभीषणद्वारा रामादयः सर्वे रावणस्य पराक्रमं, कुम्भकर्णस्य शूरतां, मेघनादस्य इन्द्रजयं, सेनापतेः प्रहस्तस्य , अन्येषां यूथपतीनां च बलपराक्रमादिकं अवजग्मुः। ततः परं रामः अवदत् -

**यानि कर्मापदानानि रावणस्य विभीषण । आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम्॥**

**अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् । राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते॥**

**रसातलं वा प्रविशेत्पातालं वापि रावणः । पितामहसकाशं वा न मे जीवन् विमोक्ष्यते॥**

**अहत्वा रावणं संख्ये सपुत्रजनबान्धवम् । अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिश्शपे॥**

[युद्ध० १९-१८-२१]इति।

श्रीरामसविधे विभीषणेन रावणस्य पराक्रमः बहुधा प्रतिपादितः। तच्छ्रुत्वा सुग्रीवादीनां मनसि चिन्ता उत्पन्ना स्यात् , रामः तदनुगुणं योत्स्यति वा ? सर्वे वयं सक्षमाः वा ? प्रबलविरोधः क्रियेत वा ? इत्येवम् । विभीषणस्यापि कदाचित् संशयः स्यात् । अतः सर्वेषां संशयनिवारणाय प्रत्ययोत्पादनाय उत्साहवर्धनाय च संशयितस्थले राज्ञा प्रतिज्ञा कर्तव्या इति सूचयितुं रामः शपथम् अकरोत् । एवमेव अर्जुनोऽपि जयद्रथवधे सर्वेषां संशयनिवारणाय शपथं चकार । उक्तं च मनुस्मृतौ –

"**प्रहर्षयेद्बलं व्यूह्य तांश्च भृशं परीक्षयेत्**" इति।

एवमेव सेतुबन्धानन्तरं सैन्यं रामः अग्रे निनाय । तदुक्तम् -

**अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः।**

**जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः॥** [युद्ध० २२-८३] इति

अनेन अभियाने बलवता पुरतः गन्तव्यमिति सूचुतमस्ति। तदुक्तं कामन्दके-

"सेनापतिं चाप्यथवा कुमारं बलैकदेशस्य पुरो निदध्यात्" इति ।

अपि च लङ्कां प्राप्य रामः सैन्यस्य व्यूहाय लक्ष्मणम् आदिदेश -

**बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण । बलं च तद्वै विभजन् शास्त्रदृष्टेन कर्मणा॥**

**शशास कपिसेनायां बलमादाय वीर्यवान् । अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः॥**

तिष्ठेद्वानरवाहिन्यां वानरौघसमावृतः । आस्थितो दक्षिणं पार्श्वं ऋषभो वानरर्षभः॥

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः । तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः॥

मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन च संयुतः । जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः॥

ऋक्षमुख्या महात्मानः कुक्षिं रक्षतु ते त्रयः । जघनं कपिसेनायाः कपिराजोऽभिरक्षतु॥

पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः । संविभक्तमहाव्यूहा महावानररक्षिता ।

अनीकिनी सा विबभौ यथा द्यौः साभ्रमण्डला॥ [युद्ध० २४- (१२-१९)]

अनेन युद्धकाले बलस्य यथाशास्त्रं कथं स्थापनीयमिति सोसूच्यते।

उक्तं च राजधर्मे-

गजानां रथिनो मध्ये रथानामनुवाजिनः । वाजिनामन्तरा स्थाप्यं पादातमपि दंशितम्॥

य एवं व्यूहते राजा स नित्यं जयते द्विषः । तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर॥ इति ।

तथा च कामन्दके-

धनुःसूची दण्डकश्च शकटो मकरध्वजः । इत्यादयो महाव्यूहाः तदाकारान् प्रकल्पयेत्॥ इति ।

अपि च मनुः-

दण्डव्यूहेन तं मार्गं यायात्तु शकटेन वा । वराहसूकराभ्यां वा सूच्या वा गरुडेन वा॥

पद्मेन चैवं व्यूहेन विनिशिश्येत्तदा स्वयम् । सूच्या वज्रेण चैवैनान् व्यूहेन व्यूह्य योधयेत्॥ इति ।

एवम् युद्धकाण्डे इतोऽपि अनेके धर्माः स्पष्टमुल्लिखिताः सन्ति । यथा एकेन एकेनैव योद्धव्यं, बलवानपि ससैन्यः अग्रे सरेत्, भ्रातरि विसंज्ञेऽपि युद्धमेव कुर्यात्, योद्धॄणां साहसं दृष्ट्वा अभिनन्दनं प्रोत्साहादिकं च कुर्यात्, शत्रोः विजयानन्तरं तद्वंशस्थायैव राज्यदानम् इत्यादिबहवः धर्माः सन्ति।

यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे नहि। यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्न हि॥

॥इति शम्॥

परिशीलितग्रन्थाः

१.श्रीमद्वाल्मीकिरामायणम्, गीता प्रेस् २.धर्माकूतम् – युद्धकाण्डः।

३.मनुस्मृतिः

# श्रीमद्वाल्मीकीयरामायणे राजनीतिः

भरतरामः कृ. M.A., M.Phil शोधछात्रः ,
RKM Vivekananda College (Autonomous),
Chennai-04.

"रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः।
राजा सर्वस्य लोकस्य देवानां मघवानिव ॥"[24]

इति रावणं प्रत्युक्तस्य प्रतिपक्षभूतस्य राक्षसस्य मारीचस्य वचनानुसारं वक्तुं शक्यते यत् धर्ममीमांसाविवक्षायां राज्ञाम् आदर्शपुरुषस्तावत् षोडशगुणसम्पन्नः समस्तराजलक्षणभाक् श्रीराम एवेति।

इदानीं सामान्यतया राजा कः? कानि तस्य कर्तव्यानि? इत्यादीनामुत्तराणि च पश्यामः -

"पार्थिवस्य तु वक्ष्यामि भृत्यानाञ्चैव लक्षणम्। सर्वाणि यो महीपालः सम्यङ् नित्यं परीक्षयेत्॥
राज्यं पालयते नित्यं सत्यधर्मपरायणः। निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥
प्रजाः प्रालयितुं शक्तः पार्थिवो यो जितेन्द्रियः"॥[25]

अपि च, रघुवंशमहाकाव्ये द्वितीयसर्गे सिंहं प्रति दिलीपस्य वचनं-

"क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः"।[26] इति प्रकृत्या क्षत्रियाणां पालनकर्म एव प्रधानं भवतीति ज्ञातुं शक्यते। अपि च वेदे पुरुषसूक्ते पालनक्रियाऽर्हता बाहोः विषये प्रसिद्धा पङ्क्तिरस्ति यथा - "बाहू राजन्यः कृतः" इति। अत एभिः पद्यैरुदाहरणैर्वा राज्ञः गुण-लक्षण-कर्तव्यादिकं सुस्पष्टं ज्ञायते॥

अधुना, श्रीमद्वाल्मीकिरामयणादयोध्याकाण्डात् "कच्चित्सर्गनामकात्" शततमसर्गात् कांश्चन राजधर्मान्, राज्यस्थविविधाधिकारिणां धर्मान् , राजगुणान् , बहूंश्च राजनीतीः

---

[24] श्रीमद्वाल्मीकिरामायणे.आर.काण्डे.३७.१३

[25] गारुडे १११ अध्याये (यद्यपि पुराणानि रामायणापेक्षया अर्वाचीनानि, तथापि पुराणप्रतिपाद्याः धर्माः शाश्वत्वात्सनातना इति धिया त एव रामेणापि भगवता आचरिता इत्यत्र पुराणमुखादेव उल्लिख्यन्ते)

[26] रघुवंशे २.५३

पश्यामः। श्रेष्ठराज्ञः लक्षणकथनव्याजेन, तादृलक्षणसम्पन्नराजानां स्वर्गप्राप्तिरूपम् उत्तमं फलञ्च लभ्यतेति, स्वयं रामः भरताय उपदिशति तत्सर्गस्यान्तिमे श्लोके। तद्यथा-

"राजा तु धर्मेण हि पालयित्वा महामतिर्दण्डधरः प्रजानाम्।
अवाप्य कृत्स्नां वसुधां यथावदितश्च्युतः स्वर्गमुपैति विद्वान्॥"[27]

<u>अथामात्यलक्षणम्</u> –

कीदृशगुणभाजः मन्त्रिणः एकस्मिन् राज्ये भवेयुरिति प्रमुखराजनीतिरनेन श्लोकेन प्रतीयते -

"कच्चिदात्मसमाःशूराः श्रुतवन्तो जितेन्द्रियाः।
कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात मन्त्रिणः॥"[28] इति।

तत्र अमात्यानां विशेषतया 'श्रुतवन्त' इत्यनेन वेदवेदाङ्गतत्वज्ञाः ब्राह्मणसचिवा एव भवेयुरिति दृढीक्रियते। उक्तञ्च मनुस्मृतौ –

"सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥"[29]

अथ भूपतिना राज्ये आचरणीयः षाड्गुण्यसंयुतः नाम मन्त्रः कः इति समुदिते प्रश्ने, चिरकालादागत-चाणक्यविरचित "कौटिल्य-अर्थशास्त्रे" सुष्टु तद्विभक्तोऽस्ति, तद्यथा –

"षाड्गुण्यस्य प्रकृतिमण्डलं योनिः"[30]।

"सन्धि-विग्रह-आसन-यान-संश्रय-द्वैधीभावाः षाड्गुण्यमृइत्याचार्याः।"[31]

"१) तत्र पणबन्धः सन्धिः २) अपकारो विग्रहः ३) उपेक्षणम् आसनं ४)अभ्युच्चयो यानम् ५) परार्पणं संश्रयः ६) सन्धिविग्रह-उपादानं द्वैधीभाव इति षड्गुणाः"[32]

किञ्च सदमात्यस्य नियुक्त्या प्रयोजनमाह श्रीरामः -

---

[27] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००,७६

[28] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.१५

[29] मनु.स्मृ. ७. ४८

[30] कौटिल्य-अर्थशास्त्रम्. ७.१.०१

[31] कौटिल्य-अर्थशास्त्रम्. ७.१.०२

[32] कौटिल्य-अर्थशास्त्रम्. (षाड्गुण्यसूत्राणि) ७.१.०६ आरभ्य ७.१.१२ सूत्रपर्यन्तम्

**"एकोऽप्यमात्यो मेधावी शूरो दक्षो विचक्षण:।**

**राजानं राजमात्रं वा प्रापयेन्महतीं श्रियम्॥"**[33] इति

अनेन ज्ञायते यत्, सन्मन्त्रिण एव स्वमेधाशूरदक्षपाण्डित्याद्यनेकसद्गुणैः राज्यं राजानं वा श्रेय: प्रति नेतुमर्हन्तीति॥

**अथ दूतलक्षणम्** –

**"कच्चिज्जानपदो विद्वान्दक्षिण: प्रतिभानवान्।**

**यथोक्तवादी दूतस्ते कृतो भरत पण्डित:॥"**[34] इति जानपदविद्वत्वादि-धर्मा एकस्मिन् दूते स्युरिति भरतं प्रत्युक्तं श्रीरामचन्द्रस्य दूतलक्षणमिदं पद्यम्। एतल्लक्षणपोषकात्मकं प्रमाणवाक्यं तावन्मनुस्मृतौ लभ्यते यथा –

**"दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम्।**

**इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम्॥"**[35] इति।

श्लोकस्यास्यार्थः स्पष्टमेव अवगम्यते। किञ्च प्राय: दूतविषये उभयत्रापि समानानि लक्षणान्येव लभ्यन्ते॥

**अथ सेनापति-सैनिकानां लक्षणम्** –

**"कच्चित् धृष्टश्च शूरश्च मतिमान् धृतिमाञ्शुचि:। कुलीनश्चानुरक्तश्च दक्ष: सेनापति: कृत:॥"**

**"बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदा:। दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिता:॥"**[36]

अपि च श्रीराम: तादृशबलवद्युद्धविशारदादिगुणोपेतानां सेनापतीनां सैनिकानाञ्च कृते उचितकाले अर्थात् विना विलम्बेन एव राज्ञा वेतनं दातव्यमिति उपदिशति भरतम्। तद्यथा –

**"कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम्। सम्प्राप्तकालं दातव्यं ददासि न विलम्बसे॥"**[37]

इति। एवञ्च प्रजानाम् आयकर-शुल्कं नाधिकं भवेत्, यद्यधिकं स्यात्तर्हि कीदृशीम् अपकीर्तिं लभते राजा इति च श्रीराम आह, तद्यथा –

---

[33] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.२४

[34] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.३५

[35] मनु.स्मृ. ७. ६३

[36] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.३०, ३१ च

[37] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.३२

"कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा। उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः॥"[38] इति

अथ कोदण्डपाणिः श्रीरामः भरतं प्रति राज्ये वर्जनीय-चतुर्दशराजदोषानाह –

"नास्तिक्यमनृतं क्रोधं प्रामादं दीर्घसूत्रताम्। अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम्॥

एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम्। निश्चितानामनारम्भं मन्त्रस्याप्यपरीक्षणम्॥

मङ्गलस्याप्रयोगं च प्रत्युत्थानं च सर्वतः। कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश॥"[39]

इति॥

अथ दोषयुक्तस्य अथवा दुर्वृत्तस्य राज्ञः का गतिरिति मनुस्मृतौ सप्तमाध्याये चतुस्त्रिंशत्तमे श्लोके उच्यते, तद्यथा –

"अतस्तु विपरीतस्य नृपतेरजितात्मनः।

संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि॥"[40] इति।

तर्हि न्यायवर्तिनो राज्ञः गतिः का? एवञ्च तस्य प्रशंसापि प्रोच्यते मनुस्मृतौ, यथा –

"एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवितः।

विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि॥"[41] इति॥

अनेन श्रीमद्वाल्मीकिरामायणानुसारमेवं तदुपकारभूत-मनुस्मृत्यर्थशास्त्रादिग्रन्थानुसारं च विविध-राज्याधिकारिणां राज्ञाञ्च धर्माः, राजनीतयश्च सुष्टु विवेचिता इति शम्॥

॥ अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ। आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ॥

---

[38] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.२८

[39] श्रीमद्वाल्मीकिरामायणे.अयो.काण्डे.१००.६५-६७

[40] मनु.स्मृ. ७. ३४

[41] मनु.स्मृ. ७. ३३

# ज्योतिषशास्त्र की उपादेयता

श्री अखिलेश्वर मिश्र

विभागाध्यक्ष, ज्योतिष विभाग

मद्रपुरी संस्कृत महाविद्यालय

ज्योतिष्मान् ग्रह–नक्षत्रों की गति को अधिकृत कर निर्मित शास्त्र का नाम ज्योतिषशास्त्र है। इस ब्रह्माण्डवर्ती जो चराचर जीव दिखतें हैं, उनमें पंचमहाभूत, त्रयगुण सप्तधातु इत्यादि समस्त ग्रह नक्षत्र ज्योति प्रभाव से ही उत्पन्न होते हैं, किन्हीं में पार्थिवांश का आधिक्य, कोई जलांश विशिष्ट, कोई अग्नि–अंश से श्रेष्ठ, कोई वायु या आकाशांश विशेष। इसी प्रकार कोई जीव सत्वग्रह प्रभाव से अतिशय सत्वसगुणवान् तो कोई रजोमय ग्रह प्रभाव से रजसगुणयुक्त तो कोई तमोगुण की प्रधानतावश तमोगुणी हो जाता है। यथा वराहमिहिर –

गुरुशशिरवयः सत्वरजः सितज्ञौ तमोऽर्कसुतभौमौ।
एतेऽन्तरात्मनः स्वां प्रकृतिं जन्तोः प्रयच्छन्ति॥

ऐसे ही कोई प्राणी रविग्रह बल बाहुल्यवशात् पित्ताधिक्ययुक्त, कोई चन्द्र के कारण कफात्मा तो कोई भौमवश रक्ताधिक्यशाली, कोई दीर्घ, कोई वामन, कोई पंगु, कोई विकलांग, कोई अन्धकाण इत्यादि ग्रहयोग बल के कारण जातक हो जाते हैं, ऐसा प्रत्यक्ष देखा जाता है। इस प्रकार के सैकडों योग जातकशास्त्र में वर्णित हैं जो स्पष्ट घटित होते हुए देखें गये हैं। समस्त प्राणी प्राक्जन्मार्जित कर्मवश जन्म लेता है तथा पूर्व कर्मवशानुसार शुभाशुभ फल भोगता है। यथोक्त वराहमिहिर –

यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम्।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव॥

वस्तुतः पूर्वजन्मार्जित कर्म ही प्रारब्ध रूप या दैव या भाग्य पद से व्यवहृत है –

पूर्वजन्मकृत कर्म तद् दैवमिति कथ्यते। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्॥

इस प्रकार के प्रारब्धफल को भविष्यत्काल में ज्योतिष शास्त्र के माध्यम से जाना जा सकता है। विगत दिवस किसी ने क्या किया यह किसी भी अन्य विधि से ज्ञात करना संभव नहीं है। किन्तु ज्योतिषशास्त्र के द्वारा कल, आज और कल क्या अपितु पूर्वजन्म में कृतकर्मों को भी जाना जा सकता है। उन पूर्वजन्मार्जित कर्मों के शुभाशुभफल को ज्ञातकर उनमें से अशुभ फल के निवृत्त्यर्थ ग्रहशान्ति, स्वस्त्ययन, जप, तप, नियम, यज्ञानुष्ठान इत्यादि करके सदाचारी जन शान्ति प्राप्त करते हैं। यदि ग्रह शान्ति इत्यादि कार्यों से कुकर्म फल नष्ट होता तो –

**नाभुक्तं क्षीयते कर्म कल्पकोटि शतैरपि।**

तथा– **मतिरुत्पाद्यते तादृग् यादृशी भवितव्यता। सहायास्तादृशा एवं व्यवसायोऽपि तादृशः॥**

इस प्रकार और – **कर्मानुगो गच्छति जीव एकः।**

शौनक ने भी कहा है –

**येन तु यत् प्राप्तव्यं तस्य विधानं सुरेशसचिवोऽपि।**

**यः साक्षान्नियतिज्ञः सोऽपि न शक्योऽन्यथा कर्तुम्॥**

और भी – **अवश्यंभाविभावानां प्रतीकारो भवेद्यदि। तदा दुःखैर्न बाध्येरन्नलरामयुधिष्ठिराः॥**

तब इन प्राचीन महर्षि वाक्यों का क्या होगा? इस प्रकार ग्रहशान्ति इत्यादि करने पर भी कुकर्ममूलकक्लेश नष्ट नहीं होता है यह सिद्ध हुआ। इस प्रकार हम यदि प्रारब्ध को ही मुख्यरूप में अंगीकार करते हैं तब विभिन्न उद्यमों में व्यक्ति की प्रवृत्ति क्यों होगी? यथा –

**फलेद्यदि प्राक्तनमेव तर्हि कृष्याद्युपायेषु मुधैव यत्नः।** और भी श्रुति में – **स्मृत्यावेदितविधिनिषेधश्च व्यर्था एव स्युः।** इस प्रकार प्रारब्ध फलवशात् उत्पन्न रोग के शान्तयर्थ आयुर्वेदोक्त भेषजोपचार निरर्थक ही होगा। किन्तु सूक्ति है – **न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।**

तथा – **उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः देवेन देयमिति कापुरुषा वदन्ति।**

**दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः॥**

तथा च – **उद्योगेनैव हि सिद्ध्यन्ति कार्याणि न मनोरथैः।**

**न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥**

उक्त वाक्यों में पुरुषोद्यम का ही प्राधान्य है। तब पौरुष तथा प्रारब्ध में युक्ति युक्त कौन है। इस संदर्भ में शास्त्र कहता है – कर्म दो प्रकार के होते हैं, दृढमूलककर्म एवं अदृढमूलककर्म। दृढमूलककर्म का क्षय किसी भी उपाय से नहीं होता है। तथा अदृढमूलककर्म का क्षय यत्नपूर्वक शान्तिकर्म से हो जाता है। जैसे आर्द्र ईंधन (काष्ठादि) को अग्नि शनैः शनैः जलायेगा, किन्तु वही ईंधन यदि सूर्य किरणों के कारण शुष्क (नीरस) हो गया हो तो अग्नि उसे तत्क्षण भस्म कर देता है। इसी प्रकार व्रत, तप, नियम, संयम तथा अनुष्ठानरूपी ताप से शुष्क हुआ कर्म स्वल्पकाल में ही नष्ट हो जाता है। जाग्रत अवस्था में भोगयोग्य आर्द्र कर्म तपादि पुण्याचरण प्रभाव से स्वप्नावस्था में परिणत हो जाते हैं। जैसे – ज्योतिषशास्त्र द्वारा ज्ञात हुआ कि किसी की मृत्यु मदान्ध गजाक्रमण से होनी है, तब उस अरिष्ट के शान्त्यर्थ ग्रहानुकूलता प्राप्त्यर्थ शान्तिकर्म से वह भय स्वप्नावस्था में क्षणमात्र अनुभूत हो वह अदृढमूलकर्म समाप्त हो जायेगा और इससे अधिक श्रेय तथा प्रेय क्या होगा कि इस ज्योतिषशास्त्र के माध्यम से उस प्राणि विशेष को प्राणदान प्राप्त हुआ। इसी प्रकार शल्यसंकुल भूमि के निवासी जन को जन–धन–पशुहानि हो रही हो, तब ज्योतिषशास्त्र द्वारा उस भूमि के शल्यशोधन के पश्चात् वहाँ के निवासी को पुनः गार्हस्थ्य सुख प्राप्त होने लगता है। क्या ऐसा वैशिष्ट्य शास्त्रान्तर से संभव है? नहीं।

इसी प्रकार ग्रहण, महावारुणी, गोविन्दद्वादशी, कुम्भपर्वयोगादि ज्योतिषशास्त्र के बिना अग्रिमरूप से ज्ञात कर धार्मिक जन कैसे तीर्थादिकों में स्नान, दान, व्रत, दर्शनगमनादि सौभाग्य प्राप्त करेंगे? किस प्रकार रामनवमी, जीवित्पुत्रिकाष्टमी, कृष्णजन्माष्टमी, चतुर्दशी, एकादशी प्रभृति व्रत कब होंगे? शास्त्रान्तर से जाना जा सकता है?

कैसे यात्रा में मृत्युयोग, दग्धयोग, क्रकचयोग, पृष्ठचन्द्र, दुष्टतारादि ज्ञान संपादित होगा? इसके न जानने से प्रस्थित जन के कर्तव्य की हानि होगी तथा उसका जीवन भी सन्देहास्पद रहेगा। इसी प्रकार बालकों के समस्त संस्कारों के सुमूहूर्त इसी शास्त्र से जाने जा सकते हैं अन्यों से नहीं। इस प्रकार के सुमूहूर्त में संस्कारित जन भी स्फूर्तिमान् नीरोग, विद्याविनयशील तथा सुखशाली होगा। इसी प्रकार कुमूहूर्त में संस्कारित सल्लक्षण शिशु भी सद्यः कुलक्षणवान् हो जाता है। सुयोग में प्रारंभित कर्म अनायास, स्वल्पकाल में सिद्ध हो जाता है। कुयोग में आरंभ किया हुआ कार्य अत्यन्त अधिककाल तक सुश्रम पूर्वक करने पर

भी सिद्ध नहीं होता है। इससे और अधिक इस ज्योतिष शास्त्र की उपयोगिता के संबंध में क्या कहा जाय। वस्तुतः इस चराचर जगत के समस्त कार्य व्यापार इस शास्त्र के माध्यम से ही हो सकते हैं।

इस प्रकार के प्रत्यक्ष शास्त्र ज्योतिषशास्त्र के तीन स्कन्ध हैं – सिद्धान्त, संहिता तथा होरा। इसे स्पष्ट रूप से बृहत्संहिता में वराहमिहिर ने कहा है –

**ज्योतिश्शास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं तत् कात्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता.**

**........होरान्योंगविनिर्णयश्च कथितः स्कन्धस्तृतीयोऽपरः।**

प्रथमस्कन्ध सिद्धान्त ज्योतिष में अंकगणित, बीजगणित, रेखागणित, त्रिकोणमिति, गोलीयरेखागणित, चापीयत्रिकोणमिति, प्रतिभाज्ञान, खगोलविज्ञान, ग्रहण, श्रृगोन्नति, ग्रहयुति, ग्रहोदयास्त, वक्रत्व, मार्गत्व, पंचांग निर्माणप्रपंच, ग्रहस्पष्टीकरण तथा यन्त्रादिसाधन विधियाँ वर्णित हैं। द्वितीय स्कन्ध संहिता–ज्योतिष में ग्रहसंचारवश जगत् का शुभाशुभ ज्ञान, शास्त्रोत्पत्ति समर्धतामहर्धता, वृष्टिविचार, वास्तु, भूकम्प, उल्कापात, धूमकेतूदय, परिवेष निहार प्रभृति विचार होता है। तृतीय स्कन्ध जातक ज्योतिष में जन्मकुण्डली, फल विचार, वर्षफल, साधन विचार, तात्कालिक फलज्ञान इत्यादि का विचार होता है।

इसी जातकशास्त्र में जन्मकुण्डली के तनु, धन, सहज, सुख, सुत, रिपु, पत्नी या पति, आयु, कर्म, धर्म, आय तथा व्यय अदि द्वादश भाव होते हैं। मेषादि राशियों में से जो राशि जन्म के समय लग्न के रूप में होती हैं उसे प्रथम भाव या तनु भाव कहते हैं तथा आगे द्वितीयादि भाव होते हैं। जिस भाव का स्वामी ग्रह स्वभवन, स्वोच्च, केन्द्र, स्ववर्गादि में यदि बैठा हो तथा सूर्यसान्निध्यवशात् अंतर्गत न हो तो शुभ होता है। इसी प्रकार जिस भाव का भावेश नीचस्थ, शत्रुगृही, षष्ठ, अष्टम, व्यय भाव में हो, अस्त हो तो अशुभ फल प्रदाता होगा। वराहमिहिर ने केन्द्र तथा त्रिकोण को शुभ भाव कहा है। सूर्य, भौम, शनि को पाप तथा और चन्द्र, बुध, गुरु, शुक्र को शुभ ग्रह कहा है। शुभग्रह दशाकालखण्ड में शुभ फल तथा अशुभ महादशा काल खण्ड में अशुभफल प्राप्त होता है।

******

# तुलसीदास के रामचरितमानस में सामाजिक मूल्य

डा0 सत्यनारायण हेच्.के.

सहायक आचार्य, हिन्दी विभाग

मद्रपुरी संस्कृत महाविद्यालय

रामायण में प्राचीन भरतखण्ड के मानव–समाज का विश्वास, आचार–विचार, रीति–रिवाजें, संस्कृति–नीतियाँ, साहस–साधनाएँ एवं जीवनशैली जैसे तथ्य सूच्य, प्रकट या प्रतिमा–मूर्त रूप में अभिव्यक्त हुए हैं। मानव संस्कृति का ऐतिहासिक दस्तावेज है रामायण जो मनुष्य की नित्य–चिरंतन स्फूर्ति का स्रोत भी है। यह महाकाव्य किसी एक कवि की वाणि मात्र न होकर समग्र राष्ट्र एवं तत्कालीन जनता की सामूहिक आवाज है। रामायण में चित्रित प्रत्येक वस्तु, व्यक्ति, विषय, आदर्श, जीवनमूल्य आदि पूरे भारतवासियों की सम्पत्ति है। मनुष्य रामायण के अंदर स्वयं को पहचानकर उसमें प्रतिपादित आदर्शों का अनुसरण करने का प्रयत्न करता है। यही है रामायण में अन्तर्निहित सामाजिक मूल्य का द्योतक।

आम जनता को सत्य, शिव, ब्रह्मा, आत्मा जैसे शब्दों के विशेषार्थ को समझाकर उसके द्वारा सामाजिक मूल्यों का पुनरुत्थान करने के लिए प्रतिमाओं की कल्पनाएँ आवश्यक पड़ीं। पहले से अपने हृदय में प्रतिष्ठापित वीर–महापुरूष और उनके अनुभव के बीच रिश्ता जोडना जनता के लिए सरल था, परिणामतः राम एवं कृष्ण अवतार–पुरुष बनकर जनता के हृदय में बस गये और उन पर काव्य–महाकाव्यादि रचनाएँ होने लगीं, रामचरितमानस भी इससे परे नहीं है।

एक ओर वैदिक काल से चलती आयी प्रबल वर्ण–व्यवस्था और दूसरी ओर विभक्त बौद्ध–जैन आदि धर्मों की भिन्न–भिन्न विचारधाराओं के कारण लोगों के मनोभाव में द्वन्द्व आ चुका था, परिणामतः सामाजिकों के जीवनमूल्य का पतन होने लगा। फिर भी सनातन, बौद्ध, ईसाई, इस्लाम आदि धर्मों के भीतर अक़सर मतांतर होते हुए मनुष्य अपने अपने गन्तव्य तक पहुँचने का प्रयास करता रहा है। इस धार्मिक मतांतर को रोककर मनुष्य को उसके अपने–अपने धर्म में अटल रखने के लिए ही कभी कभी महापुरूषों का अवतार होता रहा है। इसी श्रेणी में महान् सन्त गोस्वामी तुलसीदास को भी लिया जा सकता है, क्योंकि वे

धर्म–समन्वयकार थे, एकता के पक्षधर थे, समाज के पथप्रदर्शक थे। उन्होंने अवनत सामाजिक मूल्यों का उत्थान किया। तत्कालीन असन्तुलित समाज का समन्वय, विघटित मत–धर्म का एकीकरण, किंकर्तव्यता से पथभ्रष्ट जनता का मार्गदर्शन केवल तुलसी ही अपने रामकाव्य के द्वारा कर पाये।

धर्म का उद्देश्य *"वसुधैव कुटुम्बकम्"* अर्थात् पूरे संसार को सद्भावना के साथ अपना परिवार मानना। धर्म मानवीय मूल्यों का, सामाजिक एवं नैतिक उत्तरदायित्वों का भण्डार है। धर्म समष्टि में वैयक्तिकता के और वैयक्तिकता में समष्टि के दर्शन करानेवाला स्रोत है। धर्म आत्मोद्धार के लिए होता है। रामभक्ति के माध्यम से तुलसी ने चाहा था कि वे तत्कालीन समस्त समस्याओं का समाधान प्रस्तुत कर सके – *"रामकथा जग मंगल करनी।"* मानस ने असंख्य लोगों को नैतिक बल दिया है। अध्यात्मरामायण से तुलसी भी बहुत प्रभावित हुए, उन्होंने वाल्मीकि रामायण को मूल आधार बनाकर अध्यात्मरामायण के पथ पर चलते हुए तत्कालीन विभिन्न परिस्थितियों के कारण अधःपतित हो रहे समाज को सही रास्ते पर लाने का प्रयास अपने रामकाव्य रामचरितमानस द्वारा किया।

पारमार्थिक व्यवहार ही आत्मिकता है और लौकिक व्यवहार ही भौतिकता। आत्मिकता और भौतिकता दोनों के बीच परस्पर विषमता खड़ी हो जाने पर उसे धर्मकलह, धर्मसंकट, धर्मनष्ट या फिर धार्मिक असहिष्णुता का नाम दिया जाता है। तुलसीकालीन परिस्थिति भी इसी तरह की थी। वे अपने काल के प्रचलित सम्प्रदायों के संघर्ष तथा उनके परस्पर विरोधी सिद्धान्तों से भली–भाँति परिचित थे। विनयपत्रिका में वे कहते हैं– *"बहु मत सुनि बहु पंथ पुराननि जहाँ–तहाँ झगरो सो।"* उन्होंने जनता में संन्यास, घोर तपस्या और रहस्यमय साधना के प्रति बढ़ती जा रही श्रद्धा को देखा। तुलसी के समय में वैदिक कालीन साहित्य, कर्मकाण्ड आदि साधन साधारण जनता की पहुँच से परे थे अथवा धनाधीन थे और कर्मकाण्ड का महत्व ज्यों का त्यों बना रहा था। इस बारे में उन्होंने कहा है– *"दम दुर्गम, दान दया मखकर्म सुधर्म अधीन सबै धन को।"* कलियुग का वर्णन इस दृष्टि से महत्वपूर्ण हैं– *"निराचार जो श्रुति पथ त्यागी। कलियुग सोइ ग्यानी सो बिरागी। जाकें नख अरू जटा बिसाला। सोइ तापस प्रसिद्ध कलिकाला।"*

तुलसी की धारणा थी कि भगवान् के पास पहुँचने के लिए न तो संन्यास, न जटिल कर्मकाण्ड, न घोर तपस्या, न रहस्यवादी साधना और दर्शन का प्रकाण्ड ज्ञान आवश्यक है, इसके लिए भक्ति ही पर्याप्त है। अतः उन्हें साधारण जनता द्वारा भी अनुसरण कर सकनेवाले एक भक्तिमार्ग का रूप प्रस्तुत करना पडा। वही है *रामचरितमानस।* आदिशंकराचार्य की उक्ति है – *"मोक्षसाधन साम्ग्रयां भक्तिरेव गरीयसी।"* इसी तत्व पर तुलसी ने मोक्षसाधन के लिए मनुष्य को प्रशस्त मार्ग (भक्ति मार्ग) दिखाया। तुलसी के तत्कालीन समाज का नैतिक पतन होता जा रहा था। अधोगति की ओर चलते जा रहे समाज के लिए तुलसी का उपदेश था *"रामकथा कलि बिटप कुठारी।"*

सामाजिक जीवन के प्रति तुलसी की भावना उदात्त थी जिसे अयोध्याकाण्ड में विस्तृत रूप से देखा जा सकता है – *"नारि धरमु पति देउ न दूजा।"* यह शायद तुलसी का स्वयं अनुभव भी हो सकता था। समाज में फैलते जा रहे अधर्म और कपट मत प्रचार करनेवालों से जनता को सावधान करते हुए कहा – *"अधम नर ग्रसे जे मोह पिसाच, पाखंडी हरि पद विमुख, जानहिं झूठ न साच। अग्य, अकोबिद, अंध, अभागी, काई विषय मुकुर मन लागी। लंपट, कपटी, कुटिल, विसेषी सपनेहुँ संत सभा नहीं देखी। बातुल भूत बिबस मतवारे। जिन्ह कृत महामोह मद पाना।"* मानस की प्रस्तावना में संत समाज के विषय में कहा – *"मुद मंगलमय संत समाजू। जो जगजंगम तीरथराजू। रामभक्ति जहँ सुरसरि धारा। सरसइ ब्रह्म बिचार प्रचारा। बिधि निषेधमय कलि–मल–हरनी। करम कथा रबिनंदनि बरनी।"*

तुलसी के रामचरितमानस में राक्षसी–प्रवृत्ति के अत्याचार का, तत्कालीन घटिया आर्थिक परिस्थिति का भी वर्णन है। तुलसी के काल में कपट, दम्भ, पाखण्ड, कुमार्ग, कुतर्क, कुचाल जैसे दुर्गुण परमोच्च गति पर पहुँच गये थे। उन्होंने उसके दमन के लिए भी कुछ युक्तियाँ बतायी थी। धार्मिक ह्रास की ओर भी उन्होने इशारा किया था। नाना प्रकार के धर्म–पंथों के कारण दुविधा में पडे लोगों के और धार्मिक अधोगति के बारे में भी तुलसी ने उल्लेख किया है। तुलसी संतों की सुन्दर कल्पना भी करते हैं। सृष्टि की समष्टि प्रज्ञा का, सामूहिक विकास का, सर्वतोमुख चेतना का बोध कराना, सत्य का नव–नवीन प्रकाशन करना और जनता के मन में बसी रावण–शक्ति का अर्थात् तमस् प्रवृत्ति का मर्दन कर न्याय, सत्य

जैसे सामाजिक मूल्यों की स्थापना करना, अंत में धर्म की स्थापना करना तुलसी का उद्देश्य रहा है। समाज में राजा (सरकार) के सुशासन का भी उन्होंने उदाहरण प्रस्तुत किया है। परहित के नियम का पालन करना राजा एवं प्रजा का कर्तव्य है। तुलसी के इस रामकाव्य में धर्म समन्वय भी भरे पड़े हैं। सब सम्प्रदायों से ऊपर उठकर मनुष्य मात्र का हितकारी और प्रेरणादायक स्रोत है 'रामचरितमानस'। वे अस्पृश्यता का विरोध करते हैं, वे जाति–पाँति को महत्व नहीं देते थे, कर्तव्यभ्रष्ट विद्वज्जनों की निंदा करते हैं। मानस में इतने सामाजिक मूल्य भरे पड़े हैं कि समाज में मानस का स्थान एक ग्रंथ के रूप में नहीं, बल्कि समष्टि की अभिन्न संस्कृति के रूप में है, जैसे *"हरि अनंत हरि कथा अनंता।"*

मानस में राम की प्रस्तुति एक अवतारपुरुष के रूप में की गयी है। यह अवतारवाद समाज की पहुँच का, जीवनमूल्यों से सिद्ध अवतारवाद है। रामचरितमानस में काम–क्रोध–लोभ–मोह–मद–मात्सर्य आदि षड्गुणों पर नियंत्रण करने की सलाह है, वहाँ सुधारवादी तत्व निहित है। तुलसी के अनुसार सभी मनुष्यों को अपना परलोक सुधारना चाहिए, वे परहित के महत्व और आवश्यकता पर बारम्बार बल देते हैं। मानस में गुरूवर्यों के प्रति आस्था एवं गुरूभक्ति, मातृपितृभक्ति और कर्तव्यनिष्ठा आदि पर हर जगह याद दिलाया गया है। मानस में यह दिखाया गया है कि मानव अपने गुणों से बढ़ते हुए कहाँ तक पहुँच सकता है और अर्थपूर्ण रीत्या अपना जीवन को केवल अपने लिए ही नहीं वरन् पूर्ण समष्टि के लिए भी कैसे जी सकता है। सामाजिक–जीवनमूल्यों के प्रति भारतवासियों के सदियों के विश्वास के लिए तुलसी का मानस एक उदाहरण है। सर्वत्र तुलसी एक जात्यतीत समाज सुधारक बनकर खड़े हैं। वे अस्पृश्यता को अनुचित समझते हैं। मानस में उसी समष्टि परिवार के मूल्य की बात निहित है।

तुलसीदास का रामभक्ति काव्य "रामचरितमानस" लोकहित के लिए ही लिखा गया है *कलि मल हरनि मंगल करनि।* अतएव तुलसी को सामाजिक मूल्यों के प्रतिष्ठापक एवं कलियुग का पुनरुद्धारक कवि कहा गया है। उनका मानस समाज का उद्धार करने में सफल हुआ है, वे युगप्रवर्तक कवि हैं।

******

# Sports Day - 20.02.2016






Sri V.B.Chandrasekhar (former Indian Cricket Player) was the Chief Guest and distributed prizes to the Students & Staff

# National Seminar on Sanskrit - Dharma Mimamsa in Valmiki Ramayana 27.2.2016 to 28.2.2016




Principal addressing the seminar



Secretary addressing the seminar



Inaugural speech by Dr. N.V. Devi Prasad



Co-ordinator welcomes the Chief Guest



Principal addresses the function



Chief Guest Paithrukarathnam Dr. K. Unnikrishnan Namboodiri, H.O.D. Of Sahitya, Govt. Sanskrit College Thiruvananthapuram

# 110th Founder's Day - 05.03.2016



Ashtavadhanam performed by Brahmasri Chiravvuri Srirama Sarma



Music Concert by Ms. R. Rajalakshmi & Party



Sri P. Haridas, Senior Advocate presided over the function and...



.... delivers his presidential address




Sanskrit Drama enactment by the College students

